PolioPlus



# IMMUNIZATION AN ASSURANCE OF GOOD HEALTH TO CHILDREN

## VACCINATIONS When and How Many

| Age to Start Vaccination | Name of Vaccine | Name of Disease | How Many Times |
|---|---|---|---|
| Birth | **BCG** | **Tuberculosis** | Once |
| 6 weeks | **Polio** | **Polio** | Three times with intervals of at least one month |
| 6 weeks | **DPT** | **Diphtheria Pertussis (Whooping Cough) Tetanus** | Three times with intervals of at least one month |
| 9 months | **Measles** | **Measles** | Once |

**Babies should receive all vaccinations by the time they are twelve months old.**

Pregnant women should get themselves vaccinated against Tetanus (TT) twice—in an interval of at least one month—during the later stages of pregnancy.

HEALTHY CHILD—NATION'S HOPE & PRIDE

Design courtesy : World Health Organisation

# कठिनशब्दानां सान्दर्भिकाः अर्थाः

अनितरसाधारणम् - Extraordinary
अपक्वता - Immature
अप्रतिहता - Unrestrained
अवगत्य - Having known
अवधानम् - Attention
आनन्दतुन्दिलः - Greatly delighted
आसन्नः - Came near
उद्धृत्य - Having drawn
उह्यमानः - Being carried
केसरः - Mane
खादिता - One who eats
गर्दभः - Donkey
घटितः - Happened
छद्मवेषः - Disguise
तिन्त्रिणीवनम् - Tamarind grove
तोलयति - Compares
नवनीतम् - Butter
निद्राति - Sleeps
निरोद्धुम् - To obstruct
परिमार्ष्टुम् - To rub off
पिधातुम् - To close
पूर्णोदरम् - Belly full
बन्धुत्वम् - Relationship
भूकम्पः - Earthquake
भूतपूर्वः - Past
मल्लः - Wrestler
मल्लाङ्गणम् - Wrestling ground
मुकुलीभवति - Blossoms
मुद्गान्नम् - A rice preparation with greengram
लिम्पति - Anoints
लेशः - A small part
वज्रकायः - A strong man
वातामफलम् - The almond fruit
विक्रीय - Having sold
वृष्टिः - Rain
शङ्कुभवनम् - Pyramid

* * * *

# NOW, GIVE YOUR SON a *life*-like MODEL of *the world's finest* GUN



No more toys for your big little boy! Now, you can give him the real thrill of the world's greatest gun.

Tru-Gun. A true-to-life model of the UZI submachine gun developed by Mossad – Israel's elite commando unit.

The feel. The finish. The size. The shape. The sound. Tru-Gun is so much like the original, you can't tell the difference – till you pull the trigger.

- **squirts water in a powerful jet**
- **fires non-stop in a rapid burst**
- **unbreakable high-grade plastic**




- **no sharp edges, no metal pieces**
- **available in black, olive green, metallic silver**

New

# Tru-Gun

**U.Z.I. submachine gun**

*A life-like gun loaded with fun*

Special Introductory Blast!



Cut out this coupon and shoot over to your favourite toy store, to get 5% off on your TRU-GUN U.Z.I. submachine gun.

Name : ..............................

Age : .............. Class: ..............

Address : ..............................

..............................

HansaVision CTT 10772

# किमर्थं मौनम् उपवेशनम्?

| | |
|---|---|
| I– किं रे, मौनम् उपविष्टवान् अस्ति भवान्? किं तपः आचर्यते वा? | Hey! Why are you silent? Are you doing penance? |
| II –न, इतोऽपि वैराग्यमार्गः न आश्रितः मया। | Oh no, I am not quite happy with the world. |
| I – तर्हि कथा-कवितादिकं चिन्त्यते वा? | Are you trying to write a story or a poem then? |
| II –तादृशं कार्यं भवादृशानां, न तु मादृशानाम्। | No, that kind of work is possible only for people like you, not me. |
| I – तर्हि किमर्थम् एवं मौनं स्थितिः? | Then, what is the meaning of your silence? |
| II –समीचीनः वायुः वाति खलु? अतः अत्र उपविष्टः अस्मि। पुरतः कोऽपि नास्ति अतः मौनम्। भवान् उपविशतु तावत्। | A pleasant day, isn't it? I am here and there is nobody to talk to. So I am silent. Sit down. |
| I – अस्तु, किं गृहे पत्नीपुत्रादयः न सन्ति? गृहे सर्वथा निश्शब्दपरिसरः दृश्यते! | Sure. Is there nobody at home? There is pindrop slience! |
| II –ते सर्वे सम्भूय मित्रगृहं गताः। घण्टाभ्यन्तरे प्रत्यागच्छेयुः। | They have all gone to a friend's house. Will be back in an hour's time. |
| I – नीरसतया उपवेशनस्य कारणम् इदानीं ज्ञातं मया। भवता किमर्थं तैः सह न गतम्? | Now I know the reason for your being quiet. Why didn't you go with them? |
| II –कार्यालये अद्य कार्याधिक्यम् आसीत्। तेन अहं नितरां श्रान्तः अस्मि। अतः 'अहं न आगच्छामि, भवन्तः गत्वा आगच्छन्तु' इति उक्त्वा तान् प्रेषितवान्। | There was a lot of work in the office. I was very much tired. So, I told them "I won't come, you can go and come back" and I sent them. |




# चन्दमामा

संस्थापकः– **'चक्रपाणिः'** सञ्चालकः– **'नागिरेड्डी'**

## निसर्गनियमः

'वयं निसर्गस्य एकम् अङ्गं स्याम' इत्येवम् अस्माकं ज्येष्ठैः बहुधा उपदिश्यते। कः आशयः एतस्य?

अस्मासु बहवः कदाचित् विस्मिताः स्याम यत् किमर्थम् आकाशः नीलवर्णीयः? सूर्यः किमर्थम् उष्णः? सूर्यात् एव शक्तिं प्राप्नुवतः चन्द्रस्य किरणाः किमर्थं शीतलाः? किमर्थं नक्षत्राणि सदा स्फुरन्ति एव तिष्ठन्ति? इति।

अथवा अस्माकं मनस्सु अन्यविधाः अपि सन्देहाः उद्भवेयुः– कस्य पुष्पस्य कः वर्णः इति केन निश्चीयते? किमर्थं सर्वत्र तृणानि हरितानि एव? कः मयूरं नर्तनकौशलं बोधितवान्? किमर्थं सर्वे ऊर्णनाभाः विशिष्टया कयाचित् शैल्या एव स्वजालं निर्मान्ति?– इत्येवंप्रकारेण।

एतादृशाः प्रश्नाः अनन्ताः। केचन एतेषां समाधानम् एवं वदेयुः यत् सर्वं सृष्टिकर्तुः जगदीश्वरस्य कृत्यम् इति। विज्ञानज्ञानवन्तः केचन वदेयुः यत् एतत्सर्वं निसर्गनियमानुगुणं प्रवर्तते, अत्र परिवर्तनं सर्वथा अशाक्यम् इति। अन्ये केचन एतेषां निसर्गनियमानां वैज्ञानिकं कारणम् अन्वेष्टुम् इदानीम् अपि प्रयतमानाः स्युः।

निसर्गे परिपूर्णा सृष्टिः नाम मानवः एव। मानवस्य वैशिष्ट्यं यत् तदीयानि इन्द्रियाणि यथानिर्देशं कार्ये प्रवर्तन्ते, न तु स्वेच्छया। किन्तु खेदस्य अयं विषयः यत् मानवः एषु दिनेषु निसर्गविरुद्धं व्यवहरन् अस्ति। निसर्गनियमाः तेन उध्वस्तीक्रियमाणाः सन्ति। एतस्य परिणामतः सः बहुविधैः रोगैः अपायैः च स्वयं पीड्यमानः अस्ति अपि।

निसर्गेण मानव-पशु-पक्षि-प्रभृतिषु सर्वेषु जीविषु शान्तिः धन्यता च वितीर्णा अस्ति। निसर्गस्य अपि काचन 'शासनव्यवस्था' अस्ति। सा च व्यवस्था सुव्यवस्थितेन नियमेन निरुह्यते अपि।

वयं कदापि निसर्गविरुद्धं न व्यवहरेम।

सम्पुटः–९ फेब्रवरी–१९९३ सञ्चिका–११

प्रतिकृतिमूल्यं रू. ४-०० * वार्षिकं ग्राहकशुल्कं रू. ४८-००

CHITRA



# ऐक्यस्य अपमाननं निवारयेम

४५ वर्षेभ्यः पूर्वं भवताम् एषा पत्रिका चन्दमामा आरब्धा। स च कालः विशिष्टः आसीत्। एकत्र, विदेशीयशासनं विरुध्य कृतं सुदीर्घं युद्धं समाप्तिं गतम् आसीत्। अपरत्र, 'देशविभाजनम् अङ्गीकरणीयम्' इति भावः जनानाम् उपरि बलात् आरोप्यमाणम् आसीत्।

तथापि भारतीयाः स्वस्य देशस्य भविष्यम् उज्ज्वलं कर्तुं सिद्धाः जाताः। तैः विश्वासः कृतः यत् पारतन्त्र्यकालः जातीयविद्वेषकालः च अतीतः इति; अधुना शान्तेः, एकतायाः, प्रगत्याः, वैभवस्य च कालः समुपस्थितः इति च।

हा हन्त! किम् एतादृशी श्रद्धा दिवास्वप्नमात्रं जातम्? किम् अनुभूतं कष्टं, कृतः त्यागः च निरर्थकः जातः?

एतत् तु निगूहितुं न शक्यते यत् तत्काले काश्चन अहितकरघटनाः घटिताः इति। मत्सरपूर्णैः मतानुयायिभिः राजकीयजनैः च अस्मद्गृहे एव भेदभित्तिः निर्मिता। किन्तु सर्वाणि मतानि अतिरिच्य एतत् सत्यं विराजते यत् वयं सर्वे भगवतः पुत्राः इति। तथैव सर्वान् राजकीयव्यवहारान् अतिरिच्य एतत् तथ्यं विराजते यत् वयं सर्वे भारतीयाः इति। एतत् अस्माभिः स्पष्टम् अवगन्तव्यम्। अन्यथा वयम् आत्मानम् एव नाशयन्तः भाविजनानां भविष्यस्य अपि नाशहेतवः स्याम।

हिन्दुधर्मः बोधयति यत् सर्वेषु पदार्थेषु देवांशः अस्ति इति, सर्वे स्नेहेन द्रष्टव्याः इति च। इस्लाममतीयः मोहम्मद् पैगम्बर् बोधयति यत् परस्परस्नेहः एव ईश्वरस्य सर्वाधिकप्रियः इति। येसुक्रिस्तः वदति यत् यथा आत्मनि आदरः तथैव प्रतिवेशिजनेषु अपि स्यात् इति। एवं तर्हि परस्परद्वेषपूर्वकं व्यवहरन्तः वयं कस्य मार्गस्य अनुसरणं कुर्वन्तः स्मः? न कस्यापि। एवं खलु? वयं स्वस्य अज्ञानस्य अनुसरणं कुर्वन्तः स्मः।

भवतां पत्रिका एषा भारते स्थिताम् अनेकतायाम् एकतां पुरस्करोति। एषा विभिन्नभाषामार्गेण सर्वान् भारतीयबालान् समानविचारेण समानहर्षेण च सेवते। अतः एव, साम्प्रदायिक-कलह-कारणतः जातम् ऐक्यचिह्नस्य अपमाननं दृष्ट्वा एषा पत्रिका नितान्तं खेदम् अनुभवति। एषा भावयति यत् भारतीये इतिहासे एषा दुःस्थितिः निश्चयेन क्षणिका इति। एषा अवश्यम् एव अचिरात् निर्गच्छेत्। प्रियमित्राणि! एषा स्थितिः शीघ्रातिशीघ्रं यथा अपगच्छेत् तथा करणीयं भवद्भिः चन्दमामापाठकैः। वयं पीडाजनकपरिस्थितितः मुक्तिं प्राप्य नूतने प्रभाते पदम् अर्पयेम। जय् हिन्द् – जीयात् भारतमाता।

बि. विश्वनाथरेड्डी
चन्दमामाप्रकाशनप्रतिनिधिः

वार्ताविशेषः–




# नोबेल्शान्तिपारितोषिकम्




एतस्य वर्षस्य शान्तिपारितोषिकम् अपि कयाचित् महिलया एव प्राप्तम्। गतवर्षे एषः पुरस्कारः मियान्मार्देशस्य (यस्य च पूर्वतनं नाम बर्मा इति आसीत्।) श्रीमत्या आंग् सान् सू ची वर्यया प्राप्तः आसीत्। एतस्मिन् वर्षे तु ग्वाटेमालादेशीया रिगोबेर्टा मेन्चूवर्या प्राप्तवती, या च स्वदेशं परित्यज्य मेक्सिकोदेशे प्रवासिजीवनं यापयन्ती आसीत्।

एतस्यै मेन्चूवर्यायै दत्ते प्रशंसापत्रे नोबेल्प्रशस्तिसमित्या एवम् उक्तम् अस्ति– "स्वदेशे, अमेरिकादेशे, प्रपञ्चे च स्थितानां विभिन्नजातीनां, विभिन्नसंस्कृतीनां, विभिन्नजनसमुदायस्य च मध्ये यः भेदभावः सङ्घर्षः च दृश्यते, तस्य निवारणार्थं शान्ति-सामरस्यस्थापनार्थं च अपेक्षितायाः शक्तेः प्रतीकम् अस्ति मेन्चूवर्या" इति।

त्रयस्त्रिंशद्वर्षेभ्यः पूर्वं मेन्चूवर्या कस्मिंश्चित् निर्धनकुटुम्बे जन्म प्राप्तवती। गतात् शतकत्रयात् ग्वाटेमालादेशे यत् अन्तर्युद्धं प्रवर्तते तस्य कारणतः एतस्याः परिवारः छिन्नविच्छिन्नः जातः। मध्य-दक्षिणामेरिकादेशेषु यथा तथैव ग्वाटेमालादेशे अपि युरोपीयदेशेभ्यः समागतानां जनानां, मूलनिवासिनां रेड्इण्डियन्जनानां च मध्ये सङ्घर्षः प्रचलति। १९७०-८० काले तत्र मूलनिवासिनः दारुणं मारिताः। एतस्मिन् सङ्घर्षे मेन्चूवर्यायाः मातापितरौ एकः सहोदरः च गतप्राणाः जाताः आसन्। तत्समये एषा विंशतिवर्षीया। तदा एषा निर्णीतवती यत् जनानां मूलभूताधिकारार्थं युद्धं करणीयम् इति। यदा ग्वाटेमालासैनिकाः सम्मुखीकरणीयाः अभवन् तदा एषा गेरिल्लायुद्धपद्धतिम् आश्रितवती। तावता

एव सुरक्षासेनया ५०,००० अधिकाः ग्वाटेमालाजनाः निर्दयं मारिताः आसन्, येषु च रेड् इण्डियन्जनाः एव अधिकाः आसन्। गतेषु त्रिंशद्वर्षेषु निरन्तरसङ्घर्षः यः प्रवृत्तः तस्य फलतः अद्यावधि १,२०,००० जनाः प्राणैः वियुक्ताः जाताः सन्ति।

मेञ्चूवर्यायाः व्यवहाराः सर्वे अहिंसापराः इति वक्तुं वयं न शक्नुयाम तावत्। किन्तु तस्याः सिद्धान्ताः शान्ति-समरसतयोः सहजीवनस्य च साहाय्यकाः सन्ति इत्यत्र तु नास्ति सन्देहः। तया यत् युद्धं क्रियमाणम् अस्ति तत् मानवीयाधिकाराणां संरक्षणार्थम् अभिवृद्ध्यर्थं च सहकारि अस्ति। विषयम् एतम् अधिकृत्य नोबेल्प्रशस्तिसमित्याः कश्चन प्रतिनिधिः एवम् उक्तवान् अस्ति– "अस्माकं विश्वासः अस्ति यत् मेञ्चूवर्यायै एषः पुरस्कारः दत्तः यत् तत् अमेरिकादेशे इतरत्र च प्रसृतायाः मूलवासिसम्बद्धायाः समस्यायाः निवारणे साहाय्यकं भविष्यति इति" इति।

युरोपीयः नाविकः क्रिष्टफर् कोलम्बस् अमेरिकादेशे ५०० वर्षेभ्यः पूर्वं पदं स्थापितवान्। तस्य स्मरणार्थं समग्रे अमेरिकादेशे महता वैभवेन स्मारकोत्सवाः आचर्यमाणाः सन्ति। एतस्मिन् एव सन्दर्भे मेञ्चूवर्यया नोबेल्पारितोषिकं प्राप्तम् इति तु विशेषः एव।

यदा शान्तिपारितोषिकं प्राप्तम् इति वार्ता मेञ्चूवर्यया ज्ञाता तदा सा महता आत्मविश्वासेन उक्तवती– "एतस्मिन् युद्धे इतः पूर्वं ये सर्वस्वं प्राणान् चापि समर्पितवन्तः, तेषां स्वराः न्यायं प्रार्थयन्तः प्रतिध्वनन्तः सन्ति। 'जीवने सर्वं समाप्तम्' इति निराशया जीवनं यापनीयं नास्ति। इतिहासस्य नूतनान् अध्यायान् लेखितुम् आवश्यकानि बहूनि रिक्तानि पृष्टानि अस्माकं पुरतः दृश्यमानानि सन्ति" इति।

नोबेल्शान्तिपुरस्कारदानस्य आरम्भस्य अनन्तरम् एतत् पारितोषिकं प्राप्तवतीषु महिलासु एषा नवमी।

१९९२तमे वर्षे नोबेल्पारितोषिकं प्राप्तवन्तः अन्ये नाम– फ्रान्सदेशीयः प्रो. जार्जस् चार्पाक् (भौतशास्त्रे), अमेरिकादेशीयः प्रो. रुडोल्फ् एमार्कस् (रसायनशास्त्रे), अमेरिकादेशीयौ एव अपरौ प्रो. एड्मण्ड् फिशर् डा. एड्विन् क्रेब्स् च (वैद्यशास्त्रे), तद्देशीयः एव अन्यः प्रो. गैरी एफ्. बेकर् (अर्थशास्त्रे), वेस्ट् इण्डीस्देशीयः वाल्काट् (साहित्ये) च।



# कुरूपिणी राजकुमारी

राजपल्लीनामके ग्रामे पार्थसारथिः नाम कश्चन युवकः आसीत्। पिता अपि यदा मृतः तदा गृहम् अपि विक्रीय सः पित्रा कृतम् ऋणं प्रत्यर्पितवान्। इतः परम् एतस्मिन् ग्रामे न स्थातव्यम् इति निश्चित्य सः राजधानीम् उद्दिश्य गतवान्।

मध्याह्नसमये तेन किञ्चन अरण्यं प्राप्तम्। अरण्यमध्ये एकं तिन्त्रिणीवनम् आसीत्। वनस्य मध्ये एकः कुटीरः आसीत्। पिपासां निवारयितुम् इच्छन् पार्थसारथिः कुटीरस्य समीपं गतवान्।

सः च कुटीरः मन्त्रवादिन्याः रुद्राम्बायाः आसीत्। बहुभ्यः वर्षेभ्यः सा तत्र एकाकितया निवसति स्म। पार्थसारथिः द्वारसमीपे स्थित्वा त्रिचतुरवारम् आहूतवान्। एतत् श्रुत्वा बहिः आगता मन्त्रवादिनी रुद्राम्बा द्वारसमीपे स्थितं तरुणं दृष्ट्वा– "अये! कः भवान्? उच्चैः मन्त्रवादिनीं माम् आह्वयतः भवतः कियत् धाष्ट्यम्?" इति पृष्टवती।

रुद्राम्बायाः ललाटे विशालं रक्तं तिलकम् आसीत्। कण्ठे बह्व्यः मणिमालाः आसन्। ताम्रवर्णीयाः केशाः जटारूपं प्राप्तवन्तः आसन्। एतादृशीं मन्त्रवादिनीं दृष्ट्वा पार्थसारथिः यद्यपि क्षणकालं भीतः। तथापि आत्मानं समाश्वास्य सः उक्तवान्– "अम्ब! पिपासाकारणतः मरणावस्थां प्राप्तवान् अस्मि। यदि भवती किञ्चित् जलं दद्यात् तर्हि भवतीं श्वश्रूं भावयन् कृतज्ञतापूर्वकं स्मरामि" इति।

"अये, किं बन्धुत्वकल्पनेन? भवान् जलम् इच्छति खलु? तर्हि अन्तः आगच्छतु। बुभुक्षा अपि भवतः स्यात् एव। भोजनम् अपि ददामि तावत्" इति उक्तवती रुद्राम्बा।

रुद्राम्बा पार्थसारथये जलं दत्त्वा भोजनं

"अनामिका"



परिवेषितवती। तया विशाले पर्णे परिविष्टानि खाद्यानि खादन् पार्थसारथिः– "अम्ब! पाकः नाम पाकः! पाके नितरां निपुणा भवती। एकैकोऽपि पदार्थः नितरां रुचिकरः। अमृतायते सर्वम् अपि" इति वृद्धायाः प्रशंसां कृतवान्।

प्रशंसावचनैः रुद्राम्बा सन्तुष्टा अभवत्। सायं पार्थसारथिः यदा ततः गन्तुम् उद्युक्तः तदा तं पृष्टवती रुद्राम्बा– "वत्स! राजधान्यां भवतः बन्धुः मित्रं वा अस्ति वा? धनं कियत् अस्ति भवतः समीपे?" इति।

"न तत्र कोऽपि परिचितः, न वा मम सकाशे धनम्" इति उक्तवान् पार्थसारथिः।

एतत् श्रुत्वा उच्चैः हसन्ती रुद्राम्बा– "अये सर्वथा सरलः भवान्। नगरे जीवनं नाम न सुकरम्। मुग्धः भवान् निश्चयेन तत्र वञ्चितः भवेत्। अतः किं राजधानीं प्रति गमनेन?" इति उक्तवती।

किम् उत्तरं वक्तव्यम् इति अजानन् पार्थसारथिः मौनं स्थितवान्। तदा रुद्राम्बा प्रीत्या उक्तवती– "अये! किमर्थं मूर्खः इव तिष्ठति भवान्? भवतः मुखे चक्रवर्तित्वलक्षणं स्फुटं दृश्यते। शिरसि किरीटमात्रं न्यूनम् अस्ति" इति।

"अम्ब! अलम् उपहासेन। यः दैनन्दिनभोजनार्थम् अपि कष्टम् अनुभवति सः कथं वा राजा भवेत्? भ्रमः भवत्याः" इति उक्तवान् पार्थसारथिः।

रुद्राम्बा क्षणकालं चिन्तयित्वा उक्तवती– "वत्स! त्रिचतुराणि दिनानि अत्रैव तिष्ठतु। तदभ्यन्तरे भवतः भाग्यं निर्णीतं भविष्यति। राजकुमारी भवन्तं यथा परिणयेत् तथा अहं करिष्यामि" इति।

"अम्ब! माम् उपहसति चेत् भवत्याः कः लाभः? मया अत्र कानिचन दिनानि स्थातव्यम् इति यदि भवत्याः इच्छा स्यात् तर्हि अहं स्थास्यामि। किन्तु 'राजत्वं दापयामि' इति आशाप्रदर्शनं तु न आवश्यकम्" इति उक्तवान् पार्थसारथिः।

पूर्वं कदाचित् आसन्नप्रसवया राज्ञ्या सह वनविहारार्थं राजा अरण्यम् आगतः आसीत्। सायङ्काले तौ एतत् तिन्त्रिणीवनम् अपि

आगतवन्तौ आस्ताम्। तत्समये कश्चन व्याघ्रः राज्ञः उपरि आक्रमणम् अकरोत्। राजा धैर्येण तं मारितवान्। किन्तु ततः राज्ञी नितरां भीता। तस्याः प्रसववेदना तत्रैव आरब्धा। रुद्राम्बा राज्ञीं स्वकुटीरं नीत्वा प्रसूतिं कारितवती। राज्ञी कुरूपिणीं पुत्रीं प्रसूय प्रसूतिसमनन्तरम् एव दिवं गता।

राजा कुरूपिणीं पुत्रीं जनेभ्यः दर्शयितुम् अनिच्छन् अन्तःपुरे रहस्यमन्दिरे एव तां वर्धितवान्। अतः राजकुमारी बाह्यं प्रपञ्चं सर्वथा न दृष्टवती आसीत्। राजकुमारी इदानीं प्राप्तवयस्का जाता आसीत्। पुत्र्याः विवाहः कथं निर्वर्तनीयः इति राज्ञः महती चिन्ता आसीत्।

राज्ञी रुद्राम्बायाः प्रकोष्ठे एव पुत्रीं प्रसूतवती आसीत् इत्यतः कुरूपिण्याम् अपि राजकुमार्यां काचित् विशेषप्रीतिः आसीत् रुद्राम्बायाः। अतः सा तदा तदा राजधानीं गत्वा राजकुमारीं दृष्ट्वा वार्तालापं कृत्वा प्रत्यागच्छति स्म।

अनन्तरदिने एव रुद्राम्बा पञ्जरस्थम् एकं शुकं गृहीत्वा राजप्रासादं गतवती। राजकुमारी पञ्जरस्थं शुकं दृष्ट्वा महता सन्तोषेण– "अहो सुन्दरः शुकः! एतं शुकम् अहं सुवर्णपञ्जरे स्थापयिष्यामि" इति उक्तवती।

"अरण्ये फलवाटिकायां स्वच्छन्दतया विहरन् शुकः पञ्जरे सुखेन तिष्ठति इति



भावयति वा भवती?" इति पृष्टवती रुद्राम्बा।

"अरण्यम् इति? फलवाटिका इति? कुत्र भवति तत्? कथं भवति तत्?" इति कुतूहलेन पृष्टवती राजकुमारी।

"यदि भवती मया सह आगच्छेत् तर्हि तत्सर्वं दर्शयेयम्। किन्तु भवती का इति कोऽपि पृच्छेत् तर्हि भवत्या वक्तव्यं यत् अहं रुद्राम्बायाः पौत्री इति। यदि भवतीं साक्षात् अहं नयेयं तर्हि राजा मां शूलम् आरोपयेत्। अतः भवतीं शुकरूपेण परिवर्त्य नयामि। भवतु वा?" इति पृष्टवती रुद्राम्बा।

राजकुमारी सन्तोषेण एतत् अङ्गीकृतवती। रुद्राम्बा कमपि मन्त्रं




जपितवती। क्षणाभ्यन्तरे राजकुमारी शुकरूपं प्राप्तवती। रुद्राम्बा पञ्जरस्थं शुकं वातायनद्वारा प्रेषयित्वा शुकरूपिणीं राजकुमारीं पञ्जरे स्थापयित्वा स्वगृहं गतवती।

सायङ्कालसमये रुद्राम्बा कुटीरं प्राप्तवती। कुटीरात् बहिः मञ्चे उपविष्टः पार्थसारथिः पादशब्दं श्रुत्वा पृष्टवान्– "कः तत्र?" इति।

"वत्स! अहम् अस्मि रुद्राम्बा। किं भवान् द्रष्टुं न शक्नोति?" इति मन्दहासपूर्वकं पृष्टवती रुद्राम्बा।

"अम्ब! यदा भवती कुटीरात् निर्गतवती तदा एव अहम् अन्धत्वं प्राप्तवान्" इति अश्रूणि स्रावयन् उक्तवान् पार्थसारथिः।

तदा रुद्राम्बा पार्थसारथेः स्कन्धे प्रीत्या हस्तं स्थापयित्वा– "वत्स! भीतिः मास्तु। भवता अवश्यं दृष्टिशक्तिः पुनः प्राप्यते। मया सह अद्य मम पौत्री आगता अस्ति। सा बहुविधचिकित्साः जानाति। अचिरात् एव सा भवन्तं दर्शनसमर्थं करिष्यति। चिन्ता मास्तु भवतः" इति उक्तवती। अनन्तरं शुकरूपिणीं राजकुमारीं मानवरूपां कृत्वा लघुपात्रेण पर्णरसम् आनीय राजकुमार्यै दत्त्वा– "एतं रसं एतस्य नेत्रयोः लिम्पतु" इति उक्त्वा अन्तः गतवती।

पार्थसारथिं दृष्ट्वा राजकुमारी नितराम् आश्चर्यचकिता। यतः एतादृशं सुन्दरं जनं सा अद्यावधि न दृष्टवती आसीत्। 'एवं परमसुन्दरस्य एतस्य नेत्रयोः शक्तिः एव नास्ति खलु?' इति खेदम् अनुभूतवती सा।

रुद्राम्बया दत्तं पर्णरसं यदा राजकुमारी नेत्रयोः लिम्पन्ती आसीत् तदा पार्थसारथिः तां पृष्टवान्– "भवती का?" इति।

"अहं रुद्राम्बायाः पौत्री। औषधरसलेपनेन किं नेत्रयोः वेदना भवति? क्षणकालं सहताम्। ततः सर्वं सुष्ठु भवेत्" इति प्रीत्या उक्तवती राजकुमारी।

"वेदना काऽपि नास्ति" इति उक्तवान् पार्थसारथिः।

मन्त्रवादिनी रुद्राम्बा राजकुमारीं बोधितवती यत् कथं शुकरूपं प्राप्तव्यम् इति, केन मन्त्रेण शुकरूपतः मानवरूपं प्राप्तव्यम्

इति च। राजकुमारी सायङ्काले शुकरूपं प्राप्य राजधानीं प्रतिगतवती।

अनन्तरदिने मध्याह्नसमये सा पुनरपि कुटीरम् आगतवती। पार्थसारथेः नेत्रयोः औषधरसं लिप्तवती च। एवम् एव दश दिनानि अतीतानि। तावता राजकुमार्याः विषये पार्थसारथेः अनुरागः उत्पन्नः।

अनन्तरदिने रात्रौ पार्थसारथिः रुद्राम्बाम् उक्तवान्– "अम्ब! भवतः पौत्री महत्या श्रद्धया मम सेवां कुर्वती अस्ति। यदि अहं दृष्टिशक्तिं प्राप्नुयां तर्हि तत् तस्याः प्रयत्नस्य फलेन एव। यदि तस्याः अनुमतिः स्यात् तर्हि ताम् अहं परिणेष्यामि" इति।

"किम् एतत् वदति वत्स! भवता राजकुमारी परिणेतव्या इति प्रयत्नं कुर्वती अस्मि खलु अहम्?" इति उक्तवती रुद्राम्बा।

"राजकुमारीं न परिणेष्यामि अहम्। यदि मया काऽपि परिणीयेत तर्हि सा भवतः पौत्री एव" इति पार्थसारथिः दृढस्वरेण उक्तवान्।

अनन्तरदिने रुद्राम्बा राजकुमारीं पार्थसारथेः आशयं निवेदितवती।

"सुन्दरस्य तरुणस्य योग्या अहं सर्वथा न" इति शिरः अवनमय्य उक्तवती राजकुमारी।

"तस्य दृष्टिशक्तिः नास्ति इति चिन्तयित्वा भवती परिणयं निराकुर्वती अस्ति वा?" इति पृष्टवती रुद्राम्बा।

"किं वदति अम्ब! तेन दृष्टिशक्तिः



अवश्यं प्राप्यते। किन्तु सुन्दरस्य तस्य कुरूपिणी अहं सर्वथा अनुरूपं न" इति उक्तवती राजकुमारी।

तदा रुद्राम्बा– "भवन्तौ परस्परम् अनुरक्तौ स्तः इति तु स्फुटम्। राज्यम् अनभिलषन् यः अनुरागमात्रेण भवतीं परिणेतुं सिद्धः भवति तस्मै भवती दातव्या इति भवत्याः पितुः आशयः अस्ति। इतः परं एषः पार्थसारथिः अचिरात् एव दृष्टिं प्राप्स्यति" इति मन्दहासपूर्वकम् उक्तवती।

राजकुमारी महता आनन्देन स्वभवनं प्रतिगतवती। अनन्तदिने सा यदा प्रत्यागतवती तदा रुद्राम्बा– "वत्स! मम पौत्री आगता अस्ति। विवाहमुहूर्तः अपि

निश्चितः अस्ति। भाविनीं पत्नीं सकृत् पश्यतु तावत्" इति पार्थसारथिम् उक्त्वा मन्त्रोच्चारणं कुर्वती पार्थसारथेः नेत्रे स्पृष्टवती।

पार्थसारथिः नेत्रे उन्मील्य– "अहो दृष्टिशक्तिः प्राप्ता मया!" इति सन्तोषेण उक्त्वा पुरतः स्थितायाः कुरूपितां दृष्ट्वा शिरः अवनमितवान्।

"मम पौत्र्याः रूपं भवते न अरोचत वा?" इति पृष्टवती रुद्राम्बा।

"भवत्याः पौत्र्यां मम अनुरागः तु दृढः एव। किन्तु तस्याः कुरूपं तु ....." इति वचनम् अर्धे स्थगयित्वा मौनम् आश्रितवान् पार्थसारथिः।

रुद्राम्बा लघुदर्पणम् एकम् आनीय पार्थसारथये दत्तवती। पार्थसारथिः तेन स्वप्रतिबिम्बं दृष्टवान्। तस्य रूपं कुरूपं जातम् आसीत्। एतत् दृष्ट्वा आश्चर्येण भीत्या च चीत्कृतवान् पार्थसारथिः।

"वत्स! इदानीं वदतु। मम पौत्री भवतः अनुरूपम् एव अस्ति खलु?" इति हसन्ती पृष्टवती रुद्राम्बा।

पार्थसारथिः क्षणकालं शिरः अवनमय्य चिन्तयित्वा– "अम्ब! मम मूर्खता निवारिता भवत्या। एतं विवाहं मनःपूर्वकम् अङ्गीकृतवान् अस्मि" इति उक्त्वा रुद्राम्बया दत्तां मालां राजकुमार्याः कण्ठे स्थापितवान्।

अहो, आश्चर्यम्! कुरूपिणी राजकुमारी सुवर्णवर्णेन शोभमाना परमसुन्दरी जाता! पार्थसारथिना अपि पूर्वतनं सुन्दरं रूपं प्राप्तम्। अनन्तरं ते राजधानीं गतवन्तः।

प्रवृत्तं समग्रं श्रुतवान् राजा। राज्याभिलाषाम् अकृत्वा अनुरागमात्रेण राजकुमारीं परिणीतवन्तं पार्थसारथिं विशेषतः श्लाघितवान् राजा। अनन्तरं दिनानि सुखेन अतीतानि। राज्ञः मरणस्य अनन्तरं पार्थसारथिः राजत्वं प्राप्य न्याय्येन मार्गेण प्रजाः पालयन् 'प्रजारञ्जकः' इति ख्यातिं प्राप्तवान्।






# मायाभवनम्

९

(युवराज्ञीम् अन्वेष्टुं राजधानीतः निर्गतः महेन्द्रनाथः अरण्ये एकं सुविशालं भवनं दृष्टवान्। तस्य भवनस्य द्वारपालकस्य साहाय्येन सः तत्र स्थितवान्। अनन्तरदिने सेवकः इव अभिनयन् भवनस्य प्रकोष्ठान् परिशील्य स्वस्थानं प्रत्यागतवान्। तस्यैव भवनस्य कस्यचित् द्वारस्य रक्षककार्ये नियुक्तः अभवत् अपि सः। तदनन्तरम्....)

"अस्माकं पुत्र्याः अदृश्यताप्राप्तेः अनन्तरं सप्ताहः अतीतः। किन्तु अद्यावधि सा कुत्र इति काऽपि वार्ता न आगता खलु?" इति दुःखमिश्रितेन स्वरेण पतिम् उक्तवती राज्ञी वज्रेश्वरीदेवी।

महाराजः वीरसेनः झटिति किमपि उत्तरं न उक्तवान्। महाराज्ञयाः इव तस्य अपि स्थितिः शोचनीया एव आसीत्। क्षणद्वयस्य अनन्तरं सः राज्ञीम् उक्तवान्– "विद्यावतीम् अन्वेष्टुं देशस्य सर्वासु दिक्षु भटाः गताः सन्ति। तेषु केचन इतोऽपि न प्रत्यागताः। देशस्य केचन नागरिकाः अपि स्वयम् अन्वेषणे उद्युक्ताः सन्ति। अतः सन्तोषकरी वार्ता कुतश्चित् प्राप्येत इति भाति। चिन्तां मा करोतु भवती" इति।

"विद्यावतीम् अन्वेष्टुं सिद्धः सन् कश्चन



तरुणः केभ्यश्चित् दिनेभ्यः पूर्वं भवत्समीपम् आगतः आसीत् खलु? तस्य का वार्ता?'' इति पृष्टवती राज्ञी।

''तस्य नाम महेन्द्रनाथः इति। अद्यावधि सः न प्रत्यागतः। मम तु विश्वासः यत् सः अवश्यं विद्यावतीम् अन्विष्य आनयेत् इति'' इति उक्तवान् राजा।

''एवं सर्वतः आशा अस्ति इति भवान् तु वदति। किन्तु अद्यावधि तादृशी एका अपि वार्ता न आगता। अतः मम चिन्ता किञ्चिदपि न अपगता'' इति उक्तवती राज्ञी।

''देवि! धैर्यं सर्वत्र साधनम्। कष्टकाले अस्माभिः स्वयं मनसि धैर्यं पूरणीयम्। 'अतिस्नेहः पापाशङ्की' इति वचनं श्रुतं खलु भवत्या। एतादृशे काले अनिष्टाशङ्का सहजा। तथापि प्रयत्नेन धैर्यम् आत्मनि पूरणीयम्। वयम् एव रोदनं कुर्मः चेत् प्रजानां का वा गतिः? धैर्येण भवतु भवती। प्रयत्ने विश्वासः भवतु'' इति उक्तवान् राजा।

''विद्यावतीं ये अपहृत्य नीतवन्तः ते तां सुदूरस्थं देशम् अपि नीतवन्तः स्युः खलु?'' इति उक्तवती राज्ञी।

''एतद्विषये अपि चिन्तितम् अस्माभिः। भवत्याः सहोदरः विदेशेषु विद्यमानान् गूढचरान् उद्दिश्य वार्तां प्रेषितवान् अस्ति। अतः चिन्तां मा करोतु भवती। अन्यच्च विद्यावत्याः विषये स्थितः ग्रहाणां प्रकोपः अपि समाप्तप्रायः। वयम् एकवारं वाचस्पत्याचार्यम् आहूय ग्रहगतिविषये जानीयाम तावत्। भवती निश्चिन्ता भवतु'' इति उक्त्वा राजा कञ्चित् भटम् आहूय आज्ञापितवान् यत् अविलम्बेन ज्योतिषाचार्यः वाचस्पतिः अत्र आनेतव्यः इति।

सायं वाचस्पत्याचार्यः राजसमीपम् आगत्य– ''प्रभो, यावत् अहं भवन्तं द्रष्टुं निर्गच्छन् आसं तावता भटः मम गृहम् आगतः। मम शिष्यः मञ्जुनाथः काञ्चित् विशेषवार्तां आनीतवान् अस्ति। तां वार्तां तन्मुखादेव श्रावयितुं तं मया सह आनीतवान् अस्मि'' इति उक्त्वा पार्श्वस्थस्य मञ्जुनाथस्य परिचयं कारितवान्।

''विद्यावतीविषये का विशेषवार्ता?'' इति

तं पृष्टवती महाराज्ञी।

तदा मञ्जुनाथः उक्तवान्– "ज्योतिश्शास्त्रे उत्पन्नानां सन्देहानां निवारणार्थम् अहं प्रमुखज्योतिषिकाणां समीपं गतवान् आसम्। तत्र ते उक्तवन्तः यत् युवराज्ञ्याः जन्मकुण्डल्याः परिशीलनार्थं जगत्पत्याचार्यः अस्मान् आहूतवान् अस्ति इति। अहं जगत्पत्याचार्यं मम आचार्यस्य गृहे द्वित्रवारं दृष्टवान् आसम्। अतः अहम् एतां वार्तां निवेदयितुं साक्षात् आचार्यस्य गृहम् आगतवान्। तत्र जगत्पत्याचार्यस्य वार्ता एव नास्ति इति ज्ञात्वा नितराम् आश्चर्यचकितः अभवम्" इति।

"युवराज्ञ्याः जन्मकुण्डल्याः विषये मया जगत्पत्याचार्येण सह विस्तरेण चर्चा कृता आसीत्। किन्तु युवराज्ञ्याः अदृश्यतायाः अनन्तरं सः मया न दृष्टः एव। इदानीं ज्ञायते यत् युवराज्ञ्याः जन्मकुण्डल्याः विषये सः अन्यज्योतिषिकैः सह समालोचनं कुर्वन् अस्ति इति। आश्चर्यं नाम एतद्विषये सः मां किमपि न सूचितवान्। एवं किमर्थं सः कुर्वन् अस्ति इति तु न ज्ञायते मया" इति दुःखमिश्रितेन स्वरेण उक्तवान् वाचस्पत्याचार्यः।

"जगत्पत्याचार्यः कीदृशः इति, सः विश्वासार्हः वा न वा इति च भवता एव वक्तव्यम्। यतः तद्विषये वयं विशेषतः किमपि न जानीमः। भवन्तम् असूचयित्वा सः अन्यैः सह किमर्थं समालोचनं कुर्वन् अस्ति?



यदि सन्तोषकरी वार्ता श्रावणीया इत्येव तस्य आशयः स्यात् तर्हि व्यवहारस्य गोपनस्य का आवश्यकता?" इति उक्तवान् राजा।

"प्रभो, अद्यावधि जगत्पत्याचार्ये मम महान् विश्वासः आसीत्। किन्तु इदानीं सः यत् कुर्वन् अस्ति तस्य श्रवणात् ज्ञायते यत् प्रायः मया अपात्रे विश्वासः कृतः इति। इदानीं सः कुत्र अस्ति इति, किं कुर्वन् अस्ति इति च ज्ञातव्यम् अस्माभिः। एतत्सर्वं ज्ञात्वा पुनः अत्र आगमिष्यामि। इदानीं गमनार्थम् अनुज्ञां प्रार्थये" इति उक्त्वा राज्ञः अनुज्ञां प्राप्य शिष्येण सह ततः निर्गतवान् वाचस्पत्याचार्यः।

महाराजः प्रवृत्तं समग्रं सेनापतिम् उग्रसेनं



निवेदितवान्। सर्वं श्रुत्वा उग्रसेनः उक्तवान्– "युवराज्ञ्याः जन्मकुण्डल्याः विषये जगत्पत्याचार्यः विशेषासक्तिं यत् प्रदर्शितवान् तदा एव तस्मिन् मम सन्देहः उत्पन्नः आसीत्। युवराज्ञी यदा अदृश्या जाता तदा सः अपि अदृश्यतां गतः यत् तत् मम सन्देहं दृढीकरोति। अतः तस्य जन्मस्थानं वासस्थानम् इत्यादिकं ज्ञातुम् अहं प्रयत्नं कृतवान्। सर्वं व्यर्थं जातम्। सः विश्वासस्य अपात्रम् इति तु निश्चितम्। तस्मिन् विषये विशेषजागरूकता आश्रयणीया अस्माभिः" इति।

"अस्तु तावत्। महेन्द्रनाथस्य काऽपि वार्ता अस्ति वा? तस्य माता कुशलिनी खलु?" इति पृष्टवान् राजा।

"महेन्द्रनाथस्य तु काऽपि वार्ता नास्ति। तस्य मातुः निमित्तं सर्वाः व्यवस्थाः उपकल्पिताः सन्ति" इति उक्तवान् उग्रसेनः।

"सः तरुणः अवश्यं विद्यावत्याः कामपि वार्ताम् आनयेत् इति भाति मम" इति उक्तवान् राजा।

* * * *

महेन्द्रनाथः आरात्रि जागरितः आसीत्। किन्तु तेन किञ्चिदपि कष्टं न अनुभूतम्। सः किञ्चित्कालं द्वारसमीपे एव उपविष्टः आसीत्। अनन्तरम् उद्यानद्वारयोः मध्ये स्थितं मार्गम् अनुसृत्य किञ्चिद्दूरं गत्वा परितः दृष्टिं प्रसारितवान्। भवनस्य अधोभागे स्थितेभ्यः सर्वेभ्यः प्रकोष्ठेभ्यः प्रकाशः निर्गच्छन् आसीत्। उपरिभागे स्थितेभ्यः द्वित्रेभ्यः प्रकोष्ठेभ्यः प्रकाशः निस्सरति स्म। किञ्चित्कालस्य अनन्तरं अधोभागस्थानां प्रकोष्ठानां दीपाः निर्वापिताः। उपरिभागे स्थितेषु प्रकोष्ठेषु दीपः दृश्यमानः आसीत्। एवम् एव कश्चन कालः अतीतः। उपरिभागे स्थितानां प्रकोष्ठानां दीपाः अपि निर्वापिताः। इदानीं सर्वत्र अन्धकारः।

प्रातःकाले द्वारपालकः महेन्द्रनाथस्य समीपम् आगतः। आत्मना सह तं भवनस्य दक्षिणभागं नीतवान् च। तत्र काचन विशाला

भोजनशाला आसीत्। भोजनार्थम् उपविष्टः महेन्द्रनाथः परितः दृष्टिं प्रसारितवान्। तदा श्वेतवस्त्रधारिणी पाकशालातः निर्गच्छन्ती काचित् वृद्धा दृष्टा तेन। तस्याः पृष्ठतः उभे परिचारिके भोजनपात्रं स्वीकृत्य गच्छन्त्यौ आस्ताम्। आश्चर्यं नाम ते उभे अपि समानं वस्त्रं धृतवत्यौ आस्ताम्। एकविधानि एव आभरणानि अपि धृतवत्यौ आस्ताम्। एतत् महेन्द्रनाथे आश्चर्यम् अजनयत्। भोजनं समाप्य महेन्द्रनाथः विश्रान्त्यर्थं द्वारपालकस्य प्रकोष्ठं गतवान्।

सूर्यः अस्ताचलसमीपं गतः। महेन्द्रनाथः उत्थाय आत्मना रक्षणीयस्य द्वारस्य समीपं गतवान्। अन्धकारः इतोऽपि प्रसृतः न आसीत्। अतः सः एकां विशालां शिलाम् आरुह्य परितः दृष्टिं प्रसारितवान्। दूरे भवनस्य कानिचन सोपानानि दृष्टानि तेन। अत्रान्तरे उद्याने कश्चन शब्दः श्रुतः। महेन्द्रनाथः तस्यां दिशि दृष्टिं प्रसारितवान्। प्रातः भोजनशालायां दृष्टा वृद्धा एव तेन तत्र दृष्टा। तस्याः पृष्ठतः काचित् सुन्दरी तरुणी उद्यानसस्यानि सुन्दराणि पुष्पाणि च स्पृशन्ती मन्दं गच्छन्ती आसीत्। एषा सुकुमारी इव दृष्टा महेन्द्रनाथेन। प्रातः दृष्टाभ्यां परिचारिकाभ्यां यादृशं वस्त्रं धृतम् आसीत् तादृशम् एव वस्त्रं धृतवती आसीत् एषा अपि। तथापि ताभ्यां भिन्ना इव दृश्यते स्म एषा।

महेन्द्रनाथः कार्यव्यग्रताम् अभिनयन् कस्यापि सन्देहः यथा न स्यात् तथा व्यवहरन्





उद्यानं पश्यन् आसीत्। वृद्धा स्त्री सुन्दरी च वार्तालापं न कुरुतः स्म। वृद्धा एकत्र उपविश्य सुन्दर्याः चलनादिकं पश्यन्ती आसीत्। पुनः अल्पे एव काले अन्या काचित् उद्यानम् आगत्य वृद्धां किमपि उक्तवती। वृद्धा झटिति भवनस्य दिशि गतवती।

इदानीम् आगता युवतिः उद्याने विहरन्त्याः युवत्याः समीपं गतवती। तयोः वस्त्रं समानवर्णीयं समानस्तरीयं च आसीत्। आगन्तुका युवतिः उद्याने विहरन्तीं युवतिं भवनं नीतवती। उभे अपि भवनं प्रविष्टवत्यौ। कस्मिंश्चित् प्रकोष्ठे दीपः ज्वलितः। महेन्द्रनाथः लक्षितवान् यत् अद्य यत्र दीपः दृश्यते तस्मिन् प्रकोष्ठे ह्यः रात्रौ दीपः न आसीत् इति।

महेन्द्रनाथः द्वारसमीपे उपविश्य चिन्तयितुम् उद्युक्तः अभवत्– 'द्वारपालकस्य वचनेषु प्रस्तुता युवतिः सा का स्यात्? उद्याने विहरन्ती सुन्दरी अनन्तरम् आगता युवतिः च समानं वस्त्रं धृतवत्यौ आस्ताम्। किमर्थम् एवम्?' इति।

किञ्चित्कालस्य अनन्तरं द्वारपालकः भोजनम् आनीतवान्। तेन सह वार्तालापं कुर्वन् महेन्द्रनाथः मध्ये पृष्टवान्– "भवने कोऽपि कोलाहलः न दृश्यते। किम् अस्माकं स्वामी भवनतः बहिः गतः?" इति।

"न तथा। स्वामी भवने एव अस्ति। सः ज्योतिषिकैः सह अहोरात्रं चर्चां कुर्वन् अस्ति। अतः अत्र न आगतवान्। तस्य अनागमनतः कोलाहलः कोऽपि न श्रूयते। तथापि भवता जागरूकतया स्थातव्यम् एव। स्मरतु एतत्" इति उक्तवान् द्वारपालकः।

"अहम् अत्र द्वाररक्षणं कुर्वन् अस्मि इति स्वामी जानाति वा?" इति द्वारपालकं पृष्टवान् महेन्द्रनाथः भोजनार्थं हस्तौ मुखं च क्षालयन्।

"आं, जानाति सः। ह्यः मया एषा वार्ता निवेदिता एव। भवान् 'उद्योगः आवश्यकः' इति माम् उक्तवान् खलु। अतः अहं स्वामिनं निवेदितवान् यत् उद्योगापेक्षी कश्चन तरुणः आगतः अस्ति इति। वस्तुतः तु अत्र कश्चन उद्योगी अत्यावश्यकः आसीत्। यतः

गतसप्ताहे एकः द्वारपालकः तीव्रेण अस्वास्थ्येन शय्याम् आश्रितवान् अस्ति। अहम् एव स्थलद्वये रक्षणकार्यं कुर्वन् आसम्। तावता एव भवान् उपस्थितः। स्वामी नितरां कार्यव्यग्रः अस्ति इत्यतः विशेषपरीक्षणं विना एव भवन्तम् उद्योगे नियोजितवान् इति तु सौभाग्यम्। तत् आस्तां तावत्, विशेषवार्ता नाम भवनं प्रति आगता सा महिला कस्यचित् राज्यस्य युवराज्ञी इति श्रूयते। सा कानिचन दिनानि अत्रैव वासं करिष्यति इत्यपि श्रूयते। अतः भवता विशेषजागरूकता अवश्यम् आश्रयणीया" इति उक्तवान् द्वारपालकः।

"भवान् चिन्तां मा करोतु। एतस्यां दिशि स्वामिनः आगमनस्य सम्भावना कदाचित् स्यात् एव खलु? अतः अहं जागरूकतया एव भविष्यामि। अन्यच्च कर्तव्यस्य पालने मम श्रद्धा अस्ति एव। भवतः उपरि अपवादः यथा न आपतेत् तथा जागरूकतया व्यवहरिष्यामि। कर्तव्यपालने अल्पम् अपि अनादरं न प्रदर्शयामि" इति उक्तवान् महेन्द्रनाथः। एतावता तस्य भोजनं समाप्तम् आसीत्। अतः सः उत्थाय हस्तं मुखं च क्षालितवान्।

अनन्तरं द्वारपालकः ततः निर्गतवान्। महेन्द्रनाथः विना शब्दम् उद्यानं प्रविष्टवान्। ततः भवनं सुस्पष्टं दृश्यते स्म। भवनस्य सर्वाणि द्वाराणि पिहितानि आसन्। भवनस्य अधोभागे स्थितानां प्रकोष्ठानां द्वाराणि अपि सम्यक् पिहितानि आसन्। अट्टे स्थितानां केषाञ्चित् प्रकोष्ठानां वातायनानि उद्घाटितानि दृश्यन्ते स्म। समीपे कुत्रापि कोऽपि न दृश्यते स्म। सर्वत्र मौनं प्रसृतम् आसीत्।

'युवराज्ञ्याः अन्वेषणार्थम् अग्रे किं करणीयम्?' इति क्षणकालं तत्रैव स्थित्वा चिन्तनं कृतवान् महेन्द्रनाथः। परितः दृष्टिं प्रसार्य परिसरं सम्यक् अवलोकितवान् सः। ततः मन्दया गत्या द्वारस्य समीपम् आगतवान्। स्वकीये स्थाने उपविष्टवान् च।

–(अनुवर्तते)





# जयोऽपि पराजयः

यदि अहं पराजयम् अङ्गीकुर्यां , तर्हि वेतालजातेः एव अवमाननम् इति चिन्तयन् इव स्थितं वेतालं वशीकर्तुम् इच्छन् त्रिविक्रमः पुनरपि वृक्षस्य समीपं गतवान्। वृक्षम् आरुह्य शाखायां लम्बमानं शवं स्कन्धे आरोप्य अधः आगतवान्। ततः मौनं श्मशानाभिमुखं प्रस्थितवान् च। तदा शवान्तर्गतः वेतालः अवदत्– ''अये राजन्! पुनः पुनः पराजयं प्राप्य अपि भवान् कार्ये प्रवर्तमानः अस्ति यत् तत् तु नितरां श्लाघनीयम् एव। किन्तु लोके सर्वे भवादृशाः न भवन्ति। अहङ्कारिणः वचनस्य अपरिपालकाः वञ्चकाः अपि भवन्ति केचन। कदाचित् विवेकिभिः दीक्षारतैः अपि भवादृशैः तादृशानां स्वार्थिनां निर्णयः अङ्गीकरणीयः भवति। अत्र उदाहरणरूपेण अहङ्कारिण्याः राजकुमार्याः विवेकिनः राजकुमारस्य च कथां श्रावयामि। श्रद्धया

## वेतालकथा



शृणोतु तावत्'' इति।

अनन्तरं वेतालेन कथा आरब्धा–

विजयपुर्याः राजा शिवसेनः धर्मपालकः महापराक्रमशाली च। तस्य पत्न्याः नाम इन्द्राणी। विवाहात् बहोः कालस्य अनन्तरं ताभ्याम् एका पुत्री प्राप्ता। पुत्र्याः नाम सूर्यमुखी इति निश्चितम्।

राजा राज्ञी च सूर्यमुखीं महत्या प्रीत्या पालितवन्तौ आस्ताम्। यदा सा पञ्चवर्षीया जाता तदा तस्याः शिक्षणार्थं योग्या व्यवस्था कृता। सूर्यमुखी युद्धविद्यासु विशेषासक्तिं प्रदर्शितवती। अतः राजा तस्याः शिक्षणार्थं युद्धकलानिपुणान् गुरून् एव नियोजितवान्।

यदा सूर्यमुखी अष्टवर्षीया जाता तदा एव सा अश्वारोहणे खड्गयुद्धे शूलास्त्रप्रयोगे च अनितरसाधारणं नैपुण्यं प्रदर्शितवती। खड्गयुद्धे तस्याः नैपुण्यं दृष्ट्वा तु गुरवः एव आश्चर्यचकिताः।

सूर्यमुखी षोडशवर्षीया जाता। तस्याः माता इन्द्राणी इच्छति स्म यत् सूर्यमुख्याः विवाहः करणीयः इति, भाविजामात्रे राज्यनिर्वहणकार्यं दातव्यम् इति च। किन्तु राज्ञः शिवसेनस्य इच्छा आसीत् यत् सूर्यमुखी सिंहासने उपवेशनीया, अनन्तरम् एव तस्याः विवाहविषये चिन्तनीयम् इति।

विवाहविषये माता-पित्रोः अभिप्राये भेदः अस्ति इति सूर्यमुखी यदा ज्ञातवती तदा सा मातरम् उक्तवती– ''अम्ब! किञ्चित्कालं राज्यं शासनीयम् इति मम इच्छा। अनन्तरम् एव विवाहस्य विचारः। अतः अहं यथा इच्छामि तथा कर्तुम् अनुज्ञां ददातु कृपया'' इति। एतत् श्रुत्वा प्रत्युत्तरं किमपि वक्तुम् अशक्नुवती राज्ञी मौनम् आश्रितवती।

अनन्तरं शुभे मुहूर्ते राजा शिवसेनः सूर्यमुखीं पट्टाभिषिक्तां कृतवान्। सूर्यमुखी शासनव्यवहारे समग्रम् अवधानं केन्द्रीकृतवती। सा राज्ये प्रवर्तमानानि चौर्य-लुण्ठनादीनि निरोद्धुं समर्था जाता। निरुद्योगिभ्यः सा योग्यम् उद्योगं व्यवस्थापितवती। अलसानां द्वारा अपि कार्यकारणे सा समर्था जाता। वृद्धानां विकलाङ्गानाम् अनाथानां च निमित्तं

विविधाः कल्याणकारिणीः योजनाः सा व्यवहारे आनीतवती।

'समर्था शासिका' इति कीर्तिः प्राप्ता तया। एतत् दृष्ट्वा राजा शिवसेनः आनन्दतुन्दिलः जातः। एकदा राजा सूर्यमुखीम् उक्तवान्– "वत्से, मम पुंसन्तानः नास्ति इति यत् दुःखम् आसीत् तत् इदानीम् अपगतम्। इदानीं भवती विवाहविषये अपि यदि मनः कुर्यात् तर्हि मम सन्तोषः स्यात्" इति।

तदा सूर्यमुखी उक्तवती– "तात! भवतः इच्छायाः विरुद्धं व्यवहर्तुं न इच्छामि अहम्। किन्तु सामान्यराजकुमारी इव स्वयंवरे कस्यचित् राजकुमारस्य कण्ठे हारं समर्पयितुम् अपि न इच्छामि। यः मां खड्गयुद्धे पराजेष्यते तम् एव परिणेष्यामि अहम्। अतः राज्ये एतदनुगुणं सडिण्डिमघोषं वार्ता प्रसारिता भवतु" इति।

पुत्र्याः इच्छायाः अनुगुणं राजा वार्तां प्रसारितवान्। सूर्यकुमार्याः विवाह-प्रस्ताववार्तां श्रुत्वा बहवः राजकुमाराः नितरां सन्तुष्टाः। ते चिन्तयन्ति स्म यत् महिलायाः एतस्याः पराजये न कोऽपि क्लेशः इति। किन्तु यदा ते सूर्यमुखीं खड्गयुद्धे सम्मुखीकृतवन्तः तदा ते तस्याः खड्गयुद्धनैपुण्यं दृष्ट्वा आश्चर्येण स्तब्धाः अभवन्। सूर्यमुखी एकस्मिन् दिने एकेन एव सह युद्धं करोति स्म। सर्वेषां राजकुमाराणां वसत्यर्थं योग्या व्यवस्था कृता आसीत्।



केचन राजकुमाराः स्वस्य अल्पसामर्थ्यं स्मरन्तः युद्धम् अकृत्वा एव प्रतिगतवन्तः आसन्। पुनः केचन युद्धं कृत्वा घोरं पराजयं प्राप्य लज्जया शिरः अवनमय्य प्रतिगताः।

साहसपुरस्य युवराजः जयन्तः बुद्धिमान् आसीत्। खड्गयुद्धे तस्य विशेषप्रावीण्यम् आसीत् अपि। तथापि सः सूर्यमुख्याः सामर्थ्यम् उपेक्षया न दृष्टवान्। सः सामान्यस्य वेषं धृत्वा विजयपुरीम् आगतवान्। सूर्यकुमार्याः खड्गचालनप्रकारं सुसूक्ष्मं परिशीलितवान्। यदा सूर्यमुखी स्पर्धायां जयं प्राप्तवती तदा आनन्दातिरेकेण द्वित्रवारं करताडनं कृतवान् सः। तदा सूर्यमुखी तम् आसक्त्या दृष्टवती आसीत्।



सामान्यवेषभूषादिकं धृतवतः अपि जयन्तस्य मुखे स्थितां कान्तिं सा लक्षितवती आसीत्।

ततः जयन्तः सूर्यमुख्याः गुरोः परिचयं प्राप्य तेन सह किञ्चित् वार्तालापं कृतवान्। अनन्तरं सः स्वराज्यं प्रत्यागत्य सूर्यमुख्या प्रदर्शितं खड्गप्रहारं निवारयितुं विजयं प्राप्तुं च योग्यान् नूतनान् खड्गचालनक्रमान् विशेषतः अभ्यस्तवान्। तदनन्तरं सः पुनरपि विजयपुरीम् आगत्य निवेदितवान् यत् अहं सूर्यमुखीं सम्मुखीकर्तुम् इच्छामि इति।

जयन्त-सूर्यमुख्योः खड्गयुद्धं प्रवृत्तम्। अल्पे एव काले सूर्यमुखी ज्ञातवती यत् अहं यथा तथा एषः अपि बहूनि खड्गचालनतन्त्राणि जानाति इति। सूर्यमुखी विशेषतन्त्रेण जयन्तस्य खड्गं हस्तात् पातयितुं प्रयत्नं कृतवती। किन्तु एतत् तन्त्रं जानन् जयन्तः धैर्येण प्रहारं सम्मुखीकृतवान्। अन्ते सः नूतनं तन्त्रम् आश्रित्य विद्युद्वेगेन स्वखड्गं चालयन् सूर्यमुख्याः खड्गं भूमौ पातितवान्। एतत् दृष्ट्वा तत्र सम्मिलिताः सर्वे सन्तोषेण करताडनं कृतवन्तः। जयन्तस्य प्रशंसां कृतवन्तः अपि।

सूर्यमुखी जयन्तस्य मुखं परीक्षादृष्ट्या दृष्टवती। तया झटिति स्मृतं यत् एषः एव पूर्वं सामान्यजनः इव वेषं धृत्वा प्रेक्षकाणां मध्ये तिष्ठन् मम खड्गचालनं दृष्ट्वा करताडनेन सन्तोषं प्रकटितवान् आसीत् इति। एतत् स्मरन्त्या तया एतत् अपि झटिति अवगतं यत् केन मार्गेण जयन्तः जयं प्राप्तवान् इति।

अतः सा जयन्तं परिणेतुम् अनिच्छन्ती उक्तवती– "राजकुमार! भवान् खड्गयुद्धे मां जितवान्। अतः अभिनन्दनानि वदामि। किन्तु एतत् तु सविषादं वदामि यत् आवयोः विवाहः धर्मसम्मतः न भवति इति" इति।

एतत् श्रुत्वा जयन्तः क्षणकालम् आश्चर्यचकितः। किञ्चित्कालं मौनं स्थित्वा सः उक्तवान्– "आर्ये, भवत्याः वचनं युक्तम् अस्ति। मम गमनार्थम् अनुज्ञां ददातु कृपया" इति उक्त्वा भक्त्या राजकुमारीं नमस्कृत्य ततः निर्गतवान्।

वेतालः एवं कथां समाप्य अवदत्– "अये राजन्! सूर्यमुखी अङ्गीकृतवती आसीत् यत्

यः खड्गयुद्धे मां जेष्यति तम् एव परिणेष्यामि इति। किन्तु जयन्तः यदा जयं प्राप्तवान् तदा तस्य परिणयं किमर्थं निराकृतवती सा? वचनस्य परिपालने सूर्यमुख्याः अनादरं प्रकटयति खलु एतत्? यतः सा गर्वयुक्ता आसीत् अतः तया अप्रामाणिकता वचनभङ्गप्रवृत्तिः च प्रदर्शिता। एवं ननु? युद्धे जयं प्राप्तवन्तं जयन्तं किमर्थम् अभिनन्दितवती सा? जयन्तस्य व्यवहारः इतोऽपि विचित्रः। आत्मगौरवभावनाहीनः इव व्यवहृतवान् सः। यदा सूर्यमुख्या वचनभङ्गः कृतः तदा तेन अल्पः अपि क्रोधः न प्रदर्शितः, प्रत्युत तां श्रद्धया नमस्कृतवान् सः। तया कृतम् अङ्गीकुर्वन् मौनं ततः प्रतिगतवान् च। एतत् सर्वं किम् अनुचितं न? मम एतेषां प्रश्नानाम् उत्तराणि जानन् अपि यदि भवान् न वदेत् तर्हि भवतः शिरः सहस्रधा भग्नं भवेत्'' इति।

तदा मौनं स्थातुम् अशक्तः त्रिविक्रमः एवम् उक्तवान्– ''जयन्तः इतरे राजकुमाराः इव साक्षात् युद्धं न कृतवान्। प्रत्युत छद्मवेषेण आगत्य राजकुमार्याः खड्गयुद्धकौशलं परिशीलितवान्। एवं सूर्यमुखीतः सः खड्गविद्यातन्त्राणि कानिचन ज्ञातवान्। अतः परोक्षरूपेण सूर्यमुखी जयन्तस्य गुरुः जाता। अतः एव सूर्यमुखी जयन्तस्य परिणयं निराकृतवती। जयन्तं शिष्यं भावयन्ती अभिनन्दनवचनानि उक्तवती। एतत्सर्वं सूर्यमुख्याः व्यवहारेण झटिति ज्ञातवान् जयन्तः। सूर्यमुखीं खड्गयुद्धे जेतुम् इच्छन् जयन्तः वाममार्गम् आश्रितवान् स्यात् कदाचित्, किन्तु तस्य तीक्ष्णमतित्वं विवेकिता च अप्रतिहता एव आसीत्। अतः एव सः गुरुं सूर्यमुखीं नमस्कृत्य मौनं ततः प्रतिगतवान्। एवं सूर्यमुख्याः व्यवहारे गर्वयुक्तता, जयन्तस्य व्यवहारे अविवेकिता च किञ्चित् अपि न दृश्यते'' इति।

एवं वदता त्रिविक्रमेण मौनभङ्गः कृतः आसीत्। अतः शवान्तर्गतः वेतालः ततः अदृश्यः भूत्वा वृक्षशाखाम् अवलम्बितवान्।





# धान्यानाम् उपरि नाम

कदाचित् सोमपुरस्य ग्रामप्रमुखः, तस्य सेवकः करवीरः च क्षेत्रस्य समीपे गच्छन्तौ आस्ताम्। यदा तौ राममन्दिरसमीपं गतवन्तौ तदा कश्चन ब्राह्मणः अभिमुखम् आगतः। सः ग्रामप्रमुखं नमस्कुर्वन् उक्तवान्– "नमस्कारः श्रीमन्! ऐदम्प्राथम्येन एतं ग्रामम् आगतवान् अस्मि। त्रिवेदिवर्यस्य गृहस्य पौरोहित्यं निर्वर्तयितुम् अहम् अत्र आगतः। यदि भवतः गृहे भोजनस्य वसतेः च व्यवस्था स्यात् तर्हि निश्चिन्तता भवेत्। परश्वः प्रपरश्वः वा मम प्रतिगमनं स्यात्" इति।

तदा ग्रामप्रमुखः ब्राह्मणं पश्यन् उक्तवान्– "वयं यत् धान्यं खादामः तस्य उपरि अस्मदीयं नाम लिखितं भवति इति श्रूयते। प्रायः मम गृहे स्थितानां केषाञ्चित् धान्यानाम् उपरि भवतः नाम लिखितम् अस्ति इति भाति। आगच्छतु मया सह। मम गृहं प्रति भवतः आगमनं परमसौभाग्यकरं मन्ये" इति।

"भवान् वस्तुतः अपि अतिथिदेवः एव" इति ग्रामप्रमुखस्य प्रशंसां कृतवान् ब्राह्मणः।

अनन्तरं अतिथिना ब्राह्मणेन, सेवकेन करवीरेण च सह स्वगृहं गतवान् ग्रामप्रमुखः। तस्मिन् एव समये कस्यापि कार्यस्य निमित्तं ग्राममन्दिरस्य अर्चकः तत्र आगतः। अतिथिब्राह्मणस्य परिचयः कारितः ग्रामप्रमुखेण। परस्परपरिचयानन्तरं अतिथिः अर्चकश्च वार्तालापे मग्नौ जातौ। वार्तालापसमये अर्चकेन ज्ञातं यत् अतिथिः दूरबन्धुः एव इति।

अतः सः ग्रामप्रमुखम् उक्तवान्– "श्रीमन्! भवता सह आगतः एषः ब्राह्मणः मम दूरबन्धुः। एतत् इदानीं ज्ञातं मया। बन्धुत्वं ज्ञात्वा अपि यदि अहम् एतं गृहं

नीत्वा न भोजयेयं तर्हि अपराधी भवेयम्। अतः अद्य एतं मम गृहम् एव नेष्यामि अहम्। कृपया अनुमन्तव्यं भवता" इति।

ग्रामप्रमुखः एतत् निवेदनम् अङ्गीकृतवान्। अर्चकेन सह अतिथिः ब्राह्मणः निर्गतवान्।

तयोः निर्गमनस्य अनन्तरं करवीरः स्वामिनम् उक्तवान्– "श्रीमन्! न केवलम् अस्माकं गृहे स्थितानां धान्यानाम् उपरि, अपि तु अर्चकस्य गृहे स्थितानां धान्यानाम् उपरि अपि तस्य ब्राह्मणस्य नाम लिखितम् आसीत् इति भाति" इति।

'धान्यानाम् उपरि नाम लिखितं भवति' इति विषये करवीरस्य विश्वासः नास्ति इति ज्ञातवान् ग्रामप्रमुखः। अतः सः हसन् उक्तवान्– "करवीर! मया यत् उक्तं तत् सर्वथा सत्यम् एव। अतः एव कदाचित् पुरतः स्थितम् अन्नम् अपि अस्माभिः प्राप्तुं न शक्यते। एषः विषयः स्वानुभवात् एव अवगतः भवेत्, न अन्यथा" इति।

सायङ्कालं यावत् ग्रामप्रमुखस्य गृहे कार्यं कृत्वा स्वगृहम् आगतवान् करवीरः। कूपात् जलम् उद्धृत्य स्नात्वा भोजनार्थम् उपविष्टवान् सः। स्थालिकायाम् अन्नं परिविष्टम् अपि। तावता कोऽपि करवीरम् आहूतवान्। कः आगतवान् इति द्रष्टुं करवीरः द्वारसमीपं गतवान्। पत्नी अपि तम् अनुसृतवती।



तावता पृष्ठतः स्थितात् द्वारात् आगत्य कश्चन शुनकः करवीरनिमित्तं स्थापितम् अन्नम् अखादत्। यदा करवीरस्य पत्नी पाकशालां प्रत्यागतवती तदा अन्नं खादन्तं शुनकं दृष्टवती। क्रोधेन सा तं ताडयित्वा बहिः प्रेषितवती।

तावता करवीरः तत्र आगतः। प्रवृत्तं ज्ञात्वा अपि सः कोपं न प्राप्तवान्। सः शान्तस्वरेण उक्तवान्– "अस्माकं स्वामी यत् वदति तत् सत्यम् एव। धान्यानाम् उपरि खादितुः नाम लिखितं भवति इति तु निश्चितम्। शुनकेन यत् खादितं तस्य उपरि शुनकस्यैव नाम लिखितम् आसीत्। अतः तेन खादितम्। इदानीं किं वा कर्तुं शक्यते? पुनः

पाकं करोतु तावत्" इति।

एतत् श्रुत्वा करवीरस्य पत्नी क्रोधेन– "दार्शनिकताप्रदर्शनेन किम्? गृहे अल्पः अपि तण्डुलः नास्ति। इदानीं व्रीहिभ्यः तण्डुलान् निर्माय ततः पाकं कर्तुं तु अहं न शक्नोमि। अद्य जलं पीत्वा शयनं करवाव" इति उक्तवती।

तदा करवीरः दीर्घं निश्श्वस्य– "एवं तर्हि अद्य मम नाम धान्यानाम् उपरि लिखितं नास्ति इति भाति। अस्तु तावत्। ललाटलिखिता रेखा परिमार्ष्टुं न शक्यते" इति उक्त्वा मौनम् आश्रितवान्।

अत्रान्तरे किञ्चन शकटं गृहस्य पुरतः आगत्य स्थितम्। शकटात् करवीरस्य श्वश्रूः श्वशुरः च अवतीर्णौ। तौ दृष्ट्वा करवीरः आश्चर्यचकितः। 'इतः परम् एतयोः निमित्तं पाकः करणीयः। तदर्थं व्रीहिभेदनं कृत्वा तण्डुलाः प्राप्तव्याः। पत्नी तु एतत् कार्यम् इदानीं न कुर्यात् एव। मम उपरि एतत् कार्यम् आपतति। आसायं कार्यं कृत्वा अहं तु नितरां श्रान्तः अस्मि' इति चिन्तितवान् करवीरः।

अतः श्वशुरौ द्वित्राणि वचनानि उक्त्वा सः मञ्चस्य उपरि शयनं कृतवान्। अनारोग्यम् अभिनयन् वेदनामिश्रितं ध्वनिम् उत्पादितवान्। ततः अल्पे एव काले पतिम् उत्थाप्य मन्दहासपूर्वकम् उक्तवती पत्नी– "अये, उत्तिष्ठतु। प्राज्ञाः यत् वदन्ति तत् सत्यम् एव। यदि भोजनम् अस्माकं ललाटे लिखितं स्यात् तर्हि तत् अस्मत्समीपं स्वयम् आगच्छेत्। पश्यतु तावत्, मम मातापितरौ श्रीशैलं गत्वा पूजां समाप्य प्रसादेन सह आगतवन्तौ स्तः। तौ मुद्गान्नादिकम् मधुरभक्ष्याणि च आनीतवन्तौ। अतः आगच्छतु, आतृप्ति भोजनं करवाव" इति।

तदा उत्थाय गतः करवीरः प्रसादं भक्त्या खादन् भगवन्तम् उद्दिश्य– 'भगवन्! कुत्रापि सुदूरे स्थितस्य धान्यस्य उपरि अपि कस्यापि नाम लिखति भवान्। सर्वं भवतः लीला' इति स्वगतं वदन् प्रायश्चित्तरूपेण हस्ताभ्यां स्वकपोलौ ताडितवान्।






अस्मद्देशीया पशुपक्षिसम्पत्—

## अश्वः इव गर्दभः अपि विवेकवान् एव

यः मूर्खः भवति तं गर्दभेन तोलयन्तः निन्दन्ति जनाः। किन्तु गर्दभाः बुद्धिहीनाः तु न। गर्दभाः अश्वजातीयाः एव। पालकस्य स्वामिनः विषये प्रीतिपूर्णं व्यवहारं प्रदर्शयन्ति एते। मानवस्य आवश्यकताम् अवगत्य तदीयसूचनानुसारं व्यवहरन्ति एते। एवम् अश्वानां यथा तथैव एतेषाम् अपि बुद्धिमत्ता तु भवति एव। किन्तु गर्दभाः मानवं दृष्ट्वा किञ्चित् मनःसङ्कोचशीलाः भवन्ति।

अरण्यगर्दभाः अस्मद्देशे केवलं दृश्यमानाः विरलजातीयाः। एते गुजरातराज्ये कच्छ्-रणप्रदेशयोः अधिकतया दृश्यन्ते। सहस्रं वर्गमैल्स् यावत् प्रसृता मरुभूमिः एषः प्रदेशः। प्राचीने काले एते अरण्यगर्दभाः न केवलं रणप्रदेशे, अपि तु फारस्(ईरान्)-सिरियादेशयोः अपि बहुधा दृश्यन्ते स्म। किन्तु इदानीं ते तत्र द्रष्टुं न शक्याः।

४ द्वादशाङ्गुलौन्नत्ययुताः एते अरण्यगर्दभाः श्वेतमिश्रितपीतवर्णीयाः वातामवर्णीयाः वा भवन्ति। कण्ठतः पुच्छं यावत् धूसरवर्णीयाः केसराः भवन्ति एतेषां शरीरे। शरीरस्य अधोभागः श्वेतः भवति। लोके दृश्यमानानां गर्दभानां कर्णयोः अपेक्षया अरण्यगर्दभानां कर्णौ ह्रस्वौ। काश्मीरस्य लडाखप्रदेशे दृश्यमानाः टिबेट्-अरण्यगर्दभाः रक्त-धूसरवर्णयुक्ताः भवन्ति। अरण्यगर्दभाः प्रायः मानवेभ्यः भीताः भवन्ति। दूरात् एव मानवान् दृष्ट्वा एते जागरूकतां प्राप्य प्रतिघण्टं ५५ मैल् वेगेन धावन्तः अदृश्यतां गच्छन्ति।



# आधुनिकं भारतीयसाहित्यम्

कर्णाटकप्रदेशे पूर्वाचारपरायणानां ब्राह्मणानां कस्मिंश्चित् अग्रहारे प्राणेशाचार्यः निवसति स्म। सः कश्चन वेदपण्डितः। साम्प्रदायिकेषु आचारव्यवहारेषु तस्य महती श्रद्धा। तदनुगुणम् एव जीवति स्म सः।

तस्य पत्नी पक्षवातरोगेण ग्रस्ता आसीत्। महत्या श्रद्धया परमप्रीत्या च पत्न्याः परिचर्यां करोति स्म प्राणेशाचार्यः।

## अनन्तमूर्तिवर्यस्य कृतिः – 'संस्कारः'



तस्मिन् एव अग्रहारे नारायणः नाम अपरः ब्राह्मणः आसीत्। सः नीतिबाह्येषु सम्प्रदायविरुद्धेषु निषिद्धेषु व्यवहारेषु व्यापृतः भवति स्म। सुरां पिबन् मांसादिकं खादन् ज्येष्ठान् अवाच्यैः शब्दैः निन्दन् जीवति स्म सः। तस्य सुन्दरी काचित् प्रियतमा आसीत्। तस्याः नाम चन्द्रा इति।

नारायणः अकस्मात् दिवं गतः। चन्द्रा एतं विषयं प्राणेशाचार्यं निवेद्य प्रार्थितवती यत् अन्त्यसंस्कारार्थं व्यवस्था करणीया इति। किन्तु एतत् एव जटिलायाः नैतिकसमस्यायाः हेतुः भवति।

'नारायणः नैतिकस्तरात् अधः पतितः अस्ति। एतादृशस्य नीतिबाह्यस्य शवं साम्प्रदायिकः ब्राह्मणः स्प्रष्टुम् अर्हति वा? नीतिबाह्यस्य अन्त्यसंस्कारः शास्त्रोक्तक्रमेण कर्तुं शक्यते वा?' इत्येवं विवादः उत्पन्नः तत्र।

चन्द्रा स्वस्य सर्वाणि आभरणानि अपनीय ब्राह्मणानां पुरतः निक्षिप्य दैन्येन प्रार्थितवती यत्



मृतस्य ब्राह्मणस्य पार्थिवशरीरस्य अन्त्यसंस्कारः करणीयः इति। किन्तु ब्राह्मणाः एतत् कर्तुं न अङ्गीकुर्वन्ति। एतस्याः समस्यायाः निवारणं कथम् इति चिन्तयन् उपविशति प्राणेशाचार्यः।

सः धर्मशास्त्रग्रन्थानाम् अध्ययनं करोति। किन्तु परिहारमार्गः तु कोऽपि न प्राप्यते तेन। 'आभरणानि भवती इतः नयतु' इति आदिश्य प्राणेशाचार्यः मारुतिमन्दिरं गत्वा भगवन्तं प्रार्थयति यत् कोऽपि परिहारोपायः सूचनीयः इति। किन्तु तेनापि किमपि प्रयोजनं न सिद्धम्। अतः सः गृहं प्रति प्रस्थितवान्।

मार्गे तं प्रतीक्षमाणा चन्द्रा तेन दृष्टा। सहानुभूत्या तां पश्यति प्राणेशाचार्यः। चन्द्रा भक्त्या अवनम्य प्राणेशाचार्यस्य पादौ गृहीत्वा नमस्करोति। तदा तां प्रीत्या उत्थापयति प्राणेशाचार्यः।

तस्याः अनुपमसौन्दर्यं समीपात् दृष्टवतः प्राणेशाचार्यस्य मनसि अनुरागः उत्पन्नः। 'एतस्याः घटनायाः अनन्तरम् अपि किम् अहम् आत्मानं धर्मनिष्ठं भावयितुम् अर्हेयम्?' इति सन्देहः उत्पद्यते प्राणेशाचार्यस्य मनसि।

ततः गता चन्द्रा शूद्राणां वसतिं गत्वा धनाशां प्रदर्श्य नारायणस्य अन्त्यसंस्कारः करणीयः इति प्रार्थितवती। किन्तु ते 'ब्राह्मणस्य शवः स्पृष्टः चेत् सः अपवित्रः भवति, तदा वयं पापभागिनः भविष्यामः' इति चिन्तयित्वा पापभीत्या एतत् कार्यं निराकृतवन्तः।

अन्ते चन्द्रा कस्यचित् मुसल्मान्जनस्य साहाय्येन नारायणस्य अन्त्यसंस्कारं निर्वर्तयति। तावता केचन ब्राह्मणाः शवदहनसंस्कारं कर्तुं सिद्धाः सन्तः अग्रे आगताः। किन्तु तावता एव स च संस्कारः समाप्तः आसीत्!

खिन्नमनस्कस्य प्राणेशाचार्यस्य पत्नी मरणं प्राप्नोति। आत्मना कृतस्य अपराधस्य प्रायश्चित्तार्थम् इव प्राणेशाचार्यः अग्रहारं परित्यज्य देशाटनार्थं निर्गच्छति।

१९३१ तमे वर्षे जन्म प्राप्तवान् यु.आर्. अनन्तमूर्तिः कन्नडभाषायाः सुप्रसिद्धः कृतिकारः। तेन रचिता एषा 'संस्कार'नामिका अपूर्वा कृतिः नीतिनाम्ना समाजे व्याप्तम् अन्धविश्वासं स्फुटं प्रदर्शयति।

मानवस्वभावाः एतस्यां कृतौ यथास्थितं निरूपिताः सन्ति। यावत् वास्तविकी मनःपक्वता चित्तशुद्धिः च न भवति तावत् बाह्याचारसम्प्रदायानां पालनमात्रेण मानवस्वभावे परिवर्तनं न आगच्छति इत्येतम् अंशं समीचीनतया निरूपयति एषः ग्रन्थः।

# भवन्तः जानन्ति वा?

१. दक्षिणे भारते कुत्र शिलामध्यां गुहायां जैनमन्दिरं किञ्चन निर्मितम् अस्ति?
२. 'उड्डयनसमर्थः सर्पः' इति सर्पविशेषस्य नाम किमर्थम् आगतम्?
३. प्रपञ्चस्तरे अत्युन्नते स्थले विकसत् पुष्पं किम्?
४. शीतकम् (रेफ्रिजरेटर्) कः अन्विष्टवान्?
५. भारतस्थः सः नदः कः, यस्य च चत्वारि नामानि सन्ति? तानि नामानि कानि?
६. पुस्तकालयं स्थापितवान् प्रथमः ग्रीक्वासी कः?
७. गुरुनानकः यदा भक्तिगीतानाम् आलापनं करोति स्म तदा तस्य शिष्येषु कश्चित् तेन सह उपविश्य रबाबुवाद्यं वादयति स्म। तस्य नाम किम्?
८. मानवाः प्रतिनिमेषं कियद्वारं श्वासोच्छ्वासं कुर्वन्ति?
९. विन्ध्यपर्वतस्य दक्षिणभागे स्थितस्य अत्युन्नतस्य शिखरस्य नाम किम्?
१०. सा क्रीडा का, यस्यां च विजयी पृष्ठतः अपसरति, पराजितश्च अग्रे आगत्य तिष्ठति?

# उत्तराणि

१. तमिळनाडुराज्ये पुदुक्कोटैमण्डले स्थिते सित्तनवासलप्रदेशे। १,४०० वर्षेभ्यः पूर्वं पल्लवराजस्य महेन्द्रवर्मणः काले एतत् निर्मितम् आसीत्।
२. यतः सः स्वशरीरं पट्टिकावत् निर्माय वृक्षात् वृक्षं प्रति डयते।
३. उत्तरप्रदेशे गंढवालपर्वतप्रदेशे (६,४०० मीटर्-उन्नते) विकसत् 'एर्मेनिया हिमालयेसिस्' नामकं पुष्पम्।
४. जर्मनीदेशे म्यूनिचुप्रदेशे निवसन् कार्ल् लिण्डे-फ्रेडरिक् स्किप्पर्बर्यः। १८७०तमे वर्षे।
५. ब्रह्मपुत्रः। मानससरोवरतः उत्पद्य बङ्गालसागरेण मिलन् एषः नदः टिबेट्देशे 'त्साङ्ग् पो' नाम्ना, अरुणाचलप्रदेशे 'डीबांग्' नाम्ना, 'सियांग्'नाम्ना च, बंग्लादेशे 'मेघना'नाम्ना च आहूयते।
६. यूरिपायिडेस्। (क्रि.पू.४७०-४०६)।
७. 'मार्दना' इति। मुस्लिम्जातीयः एषः।
८. १५वारं, १८वारं वा। व्यायामसमये, उद्वेगसमये चापि आधिक्यं भवितुम् अर्हति।
९. 'गजशिखः' इति, 'आनायिमुडि' इति वा। केरलस्य मलबार्प्रदेशे पश्चिमघट्टे स्थितस्य एतस्य औन्नत्यं तु २,७०० मीटर् भवेत्।
१०. 'जूडो' इति।



# ऐश्वर्यस्यूतः

चन्द्रकान्तः जानकी-केशवयोः एकमात्र-पुत्रः। सः बुद्धिमान् आसीत्, किन्तु नितराम् अलसः। अतः जनाः तम् अनादरेण पश्यन्ति स्म। कदाचित् जानक्याः बन्धुः रवीन्द्रः गृहम् आगतवान्। तदा जानकी पुत्रस्य व्यवहारं समग्रं निवेद्य खेदं प्रकटितवती।

रवीन्द्रस्य एका पुत्री आसीत्। तस्याः नाम नन्दिनी इति। सा चन्द्रकान्ताय दातव्या इति रवीन्द्रस्य इच्छा आसीत्। तस्मात् एव सः चन्द्रकान्ते विशेषप्रीतिमान् आसीत्। अतः सः चन्द्रकान्तं स्वसमीपे उपवेश्य मृदुवचनैः हितम् उपदिष्टवान्।

तदा चन्द्रकान्तः रवीन्द्रम् उक्तवान्– "जीवने प्रभूतं धनं सम्पादनीयं, मातापितरौ सुखेन स्थापनीयौ च इति ममापि इच्छा अस्ति एव। अतः भवान् यदि चिन्तितवान् स्यात् यत् धनसम्पादनविषये अहं न चिन्तितवान् एव इति, तर्हि तत् अनुचितं भवेत्। प्रभूतं धनं सम्पाद्यते मया" इति।

तदा रवीन्द्रः आश्चर्येण उक्तवान्– "उद्योगः पुरुषलक्षणम्। अतः तद्विषये अहं वदन् आसम्। सम्पत्तिः तु पित्रार्जिता एव भवतः प्रभूतम् अस्ति। भवान् मम एकमात्रपुत्रीं नन्दिनीं परिणेष्यति चेत् ममापि सम्पत्तेः उत्तराधिकारी भवान् एव भविष्यति। अतः भवतः जीवने सम्पत्तेः अभावः न भविष्यति" इति।

चन्द्रकान्तः क्षणकालस्य मौनस्य अनन्तरं रवीन्द्रम् उक्तवान्– "श्रीमन्, क्षन्तव्यः अहम्। भवतः पुत्रीं न परिणेष्यामि अहम्। यतः अहं रामराजस्य पुत्र्यां मालत्याम् अनुरक्तः अस्मि" इति।

चन्द्रकान्तस्य मुखात् निर्गतं वचनं श्रुत्वा केशवः जानकी चापि आश्चर्यचकितौ। तदा

"भामहः"



चन्द्रकान्तः पुनः उक्तवान्– "रामराजः मां जामातृत्वेन यथा अङ्गीकुर्यात् तथा कर्तुम् अहं प्रभूतम् ऐश्वर्यं सम्पादयिष्यामि। यदा प्रभूतम् ऐश्वर्यं भविष्यति तदा मम नाम सर्वत्र प्रसृतं भविष्यति। तदा च रामराजः स्वयम् मत्समीपम् आगत्य प्रार्थयिष्यति यत् भवान् मम जामाता भवतु इति। भाग्यवन्तः शीघ्रम् एव ऐश्वर्यं प्राप्स्यन्ति इति अहं जानामि। अतः अहं कार्तिकमासे अस्मद्ग्रामम् आगमिष्यतः महर्षेः शिवानन्दस्य समीपं गत्वा मम भाग्यस्य परीक्षां करिष्यामि" इति।

दिनानि गतानि। कार्तिकमासः सम्प्राप्तः। शिवानन्दमहर्षिः तं ग्रामम् आगतः। चन्द्रकान्तः महर्षेः समीपं गत्वा स्वस्य इच्छां पूर्णतः निवेदितवान्।

तदा शिवानन्दमुनिः मन्दहासपूर्वकम् उक्तवान्– "अहं सप्ताहं यावत् अत्रैव स्थास्यामि। भवान् प्रतिदिनं मम समीपम् आगच्छतु। अनन्तरं पश्याम तावत्" इति।

एतदनुगुणं प्रतिदिनं चन्द्रकान्तः महर्षेः आश्रमं गतवान्। सप्ताहस्य अनन्तरं शिवानन्दमुनिः एकं श्वेतस्यूतं चन्द्रकान्ताय दत्त्वा उक्तवान्– "स्यूतम् उद्घाटयतु तावत्" इति।

चन्द्रकान्तः स्यूतं स्वीकृत्य उद्घाटितवान्। आश्चर्यं नाम तस्य अन्तः सुवर्णनाणकानि आसन्! एतानि दृष्ट्वा सन्तोषं प्राप्य चन्द्रकान्तः शिवानन्दमुनिं पृष्टवान्– "श्रीमन्! सप्ताहं यावत् भवान् मम स्वभावस्य परीक्षां कृतवान्। ततः मम योग्यतां निर्णीय एतम् ऐश्वर्यस्यूतं दत्तवान्। एवं ननु?" इति।

तदा शिवानन्दमुनिः मन्दहासपूर्वकं पृष्टवान्– "भवान् यथा चिन्तयति तथैव अस्ति इति भावयाम तावत्। किन्तु स्वस्मिन् तादृशी योग्यता का अस्ति इति भावयति भवान्?" इति।

"मम नियमपरता किं विशिष्टा योग्यता न?" इति पृष्टवान् चन्द्रकान्तः।

"एवं तर्हि नियमपराः सर्वे विना श्रमम् ऐश्वर्यं प्राप्तुम् अर्हाः भवन्ति इति भावयति वा भवान्?" इति पुनः पृष्टवान्

शिवानन्दमुनिः।

तदा चन्द्रकान्तः उक्तवान्– ''नियमपरतया सह बुद्धिमत्ता, साहसप्रवृत्तिः धैर्यशीलता च अवश्यं भवन्ति। एतेषां साहाय्येन अहं परिवारजनान् तोषयिष्यामि। कामधेन्वा कल्पवृक्षेण च युक्तः राजा त्रिविक्रमः यथा, तथा अहं प्रजानां सेवाम् अपि करिष्यामि'' इति।

एतत् श्रुत्वा शिवानन्दमुनिः उक्तवान्– ''भवान् आत्मानं त्रिविक्रमेण तोलयन् अस्ति यत् तदेव भवतः अज्ञानम् अपक्वतां च बोधयति। सप्ताहाभ्यन्तरे अहं ज्ञातवान् यत् ज्ञानार्जनार्थम् अपेक्षिता बुद्धिमत्ता भवतः नास्ति इति। अतः भवते धनस्यूतः दत्तः मया। अहं भावयामि यत् अनुभवस्य आधारेण भवान् ज्ञानं प्राप्स्यति इति। मासाभ्यन्तरे एव भवान् एतं धनस्यूतं प्रत्यर्पयेत् इति मम चिन्तनम् अस्ति। तत्समये अहं पञ्चाशद्योजनदूरस्थे शान्तिवने भविष्यामि। भवान् तत्र आगच्छतु। शुभं भवतु'' इति।

अनन्तरदिने एव सर्वे ज्ञातवन्तः यत् चन्द्रकान्तेन ऐश्वर्यस्यूतः प्राप्तः अस्ति इति। कमलाकान्तः नाम मित्रं तस्य समीपम् आगत्य तस्य भाग्यस्य प्रशंसां कृत्वा अवदत्– ''मित्र! मम पत्नी बहुभ्यः दिनेभ्यः मां पीडयन्ती अस्ति यत् रत्नहारः कश्चन कारयित्वा दातव्यः इति। अतः मयि कृपां



प्रदर्शयन् भवतः भगिन्याः इच्छां पूरयतु'' इति।

एवम् एव बहवः चन्द्रकान्तसमीपम् आगत्य विविधाः इच्छाः प्रकटयन्तः धनं प्रार्थितवन्तः। एवं धनं प्रार्थयितॄणां सङ्ख्या दिने दिने अवर्धत। एवं स्थिते अपि चन्द्रकान्तेन यथा चिन्तितं तथा न प्रवृत्तम्। रामराजः तस्य समीपं न आगतवान्, न वा मम पुत्रीं परिणयतु इति प्रार्थितवान्। एतेन चन्द्रकान्तः नितरां निराशः। अन्ते चन्द्रकान्तः कमलाकान्तं नरसिंहं च रामराजस्य समीपं प्रेषितवान्, तयोः द्वारा विवाहप्रस्तावः कारितः च।

कमलाकान्तः नरसिंहः च रामराजस्य

समीपं गत्वा चन्द्रकान्तस्य अपेक्षां निवेदितवन्तौ। तदा रामराजः उक्तवान्– "अहं मम पुत्रीं धनवते दातुं न इच्छामि। कस्मैचित् महापुरुषाय सा दातव्या इति मम इच्छा। सम्पत्तेः न्यूनता काऽपि नास्ति मम। भवतोः मित्रम् इदानीं धनवत् स्यात् कदाचित्, किन्तु श्रेष्ठा व्यक्तिः तु न। उदात्तव्यवहारेण परिश्रमशीलतया च मानवस्य गौरवं वर्धते। अप्रयत्नेन प्राप्तं धनम् अस्थिरं, गौरवार्हं चापि न। एतं विषयं भवन्तौ स्वमित्रं वदताम्" इति।

कमलाकान्तः नरसिंहः च प्रत्यागत्य प्रवृत्तं समग्रं चन्द्रकान्तं निवेदितवन्तौ। एतत् श्रुतवतः चन्द्रकान्तस्य मनसि विचारतरङ्गाः। न्यायमार्गेण, परिश्रमेण च जीवनं कृत्वा गौरवं प्राप्तव्यम् इति विचारः तस्य मनसि स्फुटः जातः। रात्रौ स्वप्ने तेन एतदपि दृष्टं यत् बहवः जनाः कृत्रिमां प्रीतिं प्रदर्शयन्तः विविधव्याजान् वदन्तः धनं ददातु इति पीडयन्ति, निराकरणं प्रदर्शितं चेत् ताडयन्तः ऐश्वर्यस्यूतं वशीकर्तुं प्रयत्नं कुर्वन्ति इति।

अनन्तरदिने प्रातः एव चन्द्रकान्तः मातरम् उक्तवान्– "अम्ब! अहं नन्दिनीं परिणेतुं सिद्धः अस्मि। अतः यथोचितं व्यवस्थां कुर्वन्तु। अहम् अद्यैव शान्तिवनं गत्वा शिवानन्दमुनिं दृष्ट्वा आगमिष्यामि" इति।

तदा जानकी आश्चर्येण पृष्टवती– "शान्तिवनं किमर्थं गम्यते इदानीम्?" इति।

एतत् श्रुत्वा मन्दहासं प्रकटयन् उक्तवान् चन्द्रकान्तः– "भगवता सर्वेभ्यः मानवेभ्यः 'बुद्धि'नामकः अपूर्वः ऐश्वर्यस्यूतः दत्तः अस्ति। तस्य साहाय्येन न केवलं धनम्, अपि तु सुखं शान्तिं चापि सम्पादयितुं शक्यते। एषः विचारः ह्यः रात्रौ मया अवगतः। अतः इतः परम् एतेन ऐश्वर्यस्यूतेन मम किमपि प्रयोजनं नास्ति। एतं स्यूतं शिवानन्दमुनये प्रत्यर्पयिष्यामि। भगवता दत्तस्य वास्तविकस्य ऐश्वर्यस्यूतस्य साहाय्येन जीविष्यामि अहम्" इति।





# बुद्धिमती बालिका

वज्रदत्तः नाम राजा पूर्वं विदेहराज्यं पालयन् आसीत्। सः प्रजानां सुखदुःखादिकं ज्ञातुं छद्मवेषेण राज्ये सञ्चारं करोति स्म। मन्त्री सुबुद्धिः सदा तेन सह भवति स्म।

कदाचित् राजा मन्त्री च छद्मवेषेण कस्मिंश्चित् ग्रामे सञ्चारं कुर्वन्तौ आस्ताम्। तदा तौ कस्माच्चित् कुटीरतः दुःखमिश्रितं ध्वनिं श्रुतवन्तौ। आश्चर्यम् अनुभवन्तौ तौ गमनं स्थगयित्वा तत् सम्भाषणं श्रुतवन्तौ।

''इदानीं किं करणीयम् इति अहं तु न जाने। भवत्याः मातरं भगवान् एव रक्षेत्'' इति कुटीरस्थेन केनचित् उक्तम्।

निराशापूर्णम् असहायकताद्योतकम् एतत् वचनं श्रुतवतः राज्ञः मनसि दया उत्पन्ना। मन्त्री राजा च विना शब्दं गत्वा कुटीरस्य वातायनस्य द्वारा अन्तः दृष्टिं प्रसारितवन्तौ। अन्तः कश्चन पुरुषः खेदेन उपविष्टः आसीत्। तस्य पार्श्वे तदीया पुत्री रुदती उपविष्टा आसीत्। तयोः समीपे एव पुरुषस्य पत्नी वेदनाम् अनुभवन्ती कटस्य उपरि शयनं कृतवती आसीत्।

राजा मन्त्री च अन्तः गतवन्तौ। तौ दृष्ट्वा सः निर्धनः पुरुषः उत्थितवान्।

''भवतः कीदृशं कष्टम्? मां सर्वं वदतु। यदि शक्यं तर्हि अहं किञ्चित् साहाय्यं कुर्याम्'' इति उक्तवान् राजा।

''श्रीमन्! अहं कश्चन निर्धनः। मम पत्नी अस्वस्था अस्ति। तस्याः चिकित्सार्थं विंशतिः रूप्यकाणि आवश्यकानि। यदि कोऽपि उदारः तावत् धनं मह्यम् ऋणरूपेण दद्यात् तर्हि अहं मासाभ्यन्तरे तत् प्रत्यर्पयेयम्। किन्तु निर्धनाय मह्यं कः वा ऋणं दद्यात्? विक्रयणार्थम् आधिरूपेण स्थापनार्थं वा मम समीपे किमपि नास्ति। अहं सर्वथा असहायः अस्मि'' इति उक्तवान् सः निर्धनः।

''तावत् धनम् अहं भवते दास्यामि। किन्तु

''पञ्चविंशतिवर्षेभ्यः पूर्वं चन्दमामायां प्रकाशिता कथा''



भवान् कथं तत् प्रत्यर्पयितुं शक्नुयात्?'' इति पृष्टवान् राजा।

''परिश्रमेण यत् सम्पादयामि तत्र किञ्चित् किञ्चित् सञ्चयं कुर्वन् धनं सङ्गृह्य ऋणं प्रत्यर्पयिष्यामि। मासाभ्यन्तरे एतत् कर्तुं शक्यते इति विश्वासः मम'' इति उक्तवान् सः निर्धनः।

''अस्तु तर्हि। एतत् धनं स्वीकरोतु तावत्'' इति वदन् मन्त्रिणं दृष्टवान् राजा। मन्त्री स्यूतात् विंशतिं रूप्यकाणि गणयित्वा निर्धनाय दत्तवान्।

आश्चर्यं प्रकटयन् धनं स्वीकृत्य कृतज्ञताभावं चापि प्रकटयन् उक्तवान् निर्धनः– ''भवन्तौ कौ, कुत्र निवसतः इति अह न जानामि। कुत्र धनं प्रतिदातव्यम् इत्यपि न जानामि। एतत् अपि न जानामि यत् भवन्तौ वृद्धिरूपेण कियत् धनम् इच्छतः इति'' इति।

''वृद्धिः तु मास्तु। किन्तु मासावधौ ऋणं तु अवश्यं प्रत्यर्पणीयम्। अद्य शुक्लचतुर्थी। आगामिमासे शुक्लचतुर्थ्यां सूर्यास्तसमये ग्रामसीमायां स्थितस्य गणेशमन्दिरस्य समीपं धनं स्वीकृत्य आगच्छतु भवान्। तत्र आवां भवावः'' इति उक्तवान् राजा। अनन्तरं सः मन्त्री च ततः निर्गतवन्तौ।

सन्तोषम् अनुभवन् निर्धनः पत्न्याः चिकित्सां कारितवान्। पत्नी स्वस्था जाता अपि। मासः अतीतः। शुक्लचतुर्थी आगता। किन्तु निर्धनस्य हस्ते विंशतिः रूप्यकाणि पूर्णतः न आसन्। कानिचन रूप्यकाणि न्यूनानि आसन्। न्यूनं धनं स्वीकृत्य मन्दिरं गन्तुं न इच्छति स्म सः। 'समग्रं धनं सङ्गृह्य एव तौ दृष्ट्वा क्षमां प्रार्थयन् धनं प्रत्यर्पयिष्यामि' इति चिन्तितवान् सः।

शुक्लपञ्चमी उपस्थिता। राजा मन्त्री च यथापूर्वं वेषान्तरं धृत्वा निर्धनस्य कुटीरस्य समीपम् आगतवन्तौ। मन्त्री उच्चस्वरेण पृष्टवान्– ''कः अस्ति अन्तः?'' इति।

तदा निर्धनस्य पुत्री गृहात् बहिः आगतवती। तौ दृष्ट्वा उक्तवती सा– ''अहो, भाग्यं सम्यक् अस्ति! सर्वत्र प्रकाशः! कुत्रापि अन्धकारः एव नास्ति!'' इति।

तया किम् उक्तम् इति न ज्ञातवान् राजा। किन्तु मन्त्री तस्याः आशयं जानन् पृष्टवान्– "भवत्याः पिता कुत्र?" इति।

"उपरि आरुह्य सूर्यस्य नेत्राणि पिधातुं गतः अस्ति सः" इति उक्तवती निर्धनपुत्री।

"भवत्याः माता कुत्र?" इति पृष्टवान् मन्त्री।

"कूपस्तम्भस्य जलात् धनम् आनेतुं गता अस्ति सा" इति उक्तवती निर्धनपुत्री।

"भवती किं कुर्वती अस्ति?" इति पुनः पृष्टवान् मन्त्री।

"सुवर्णात् रजतं पृथक्कृत्य अग्नेः उपरि स्थापितवती अस्मि। जडां बुद्धिहीनां जले मिश्रीकृत्य तया सीमाः लिम्पन्ती अस्मि" इति उक्तवती निर्धनपुत्री।

तदा मन्त्री पुनः पृष्टवान्– "आवाम् आगच्छेव इति किं भवत्याः पिता न जानाति स्म?" इति।

"निश्चयेन सः जानाति स्म श्रीमन्। दश सिद्धानि। अवशिष्टानां दशानां मुखं द्वाभ्यां पूरणीयम् अस्ति। तावत् अकृत्वा भवतोः पुरतः स्थातुं न इच्छति सः। अतः सः माम् उक्तवान् अस्ति यत् दशवारं पार्श्वपरिवर्तनं यावत् क्रियते तदभ्यन्तरे आगत्य अवश्यं करौ प्रदर्श्येते इति वदतु इति" इति उक्तवती निर्धनपुत्री।

"आवां कौ इति जानाति वा भवती?" इति पृष्टवान् मन्त्री।



"कुतो न? त्रि-क्षकारात्मकौ भवन्तौ" इति उक्त्वा तौ नमस्कृतवती निर्धनपुत्री।

ततः प्रतिगच्छन् राजा मन्त्रिणं पृष्टवान्– "तया किम् उक्तम् इति सर्वथा न अवगतं मया। भवता किमपि ज्ञातं वा?" इति।

"आं, सर्वम् अवगतम्। सा निर्धनकुले जाता स्यात् नाम, किन्तु सा नितरां बुद्धिमती" इति उक्तवान् मन्त्री।

"तस्याः बालिकायाः वचनस्य आशयः कः?" इति पृष्टवान् राजा।

"प्रथमं सा बालिका उक्तवती– भाग्यं सम्यक् अस्ति इति। तस्य अर्थः– मातुः आरोग्यं सम्यक् अस्ति इति। 'भाग्य'शब्देन तया आरोग्यं सूचितम्। तथैव

'प्रकाश'शब्देन सुखम्, 'अन्धकार'शब्देन कष्टं च सूचितं तया। 'इदानीं गृहे कष्टं नास्ति, सुखम् अस्ति' इति तस्याः आशयः आसीत्। 'पिता सूर्यस्य नेत्राणि पिधातुं गतवान्' इति उक्तवती सा। 'सूर्यस्य नेत्राणि' नाम आतपः। तस्याः पिता कुटीरस्य छदिं समीकर्तुं गतवान् आसीत्। छदिं समीकृत्य कुटीरस्य वासयोग्यतासम्पादने सः निपुणः आसीत्। यदा मातुः विषये पृष्टं तदा सा बालिका उक्तवती यत् माता ताडरसं विक्रेतुं गता इति। ताडवृक्षः जलं ददाति। अतः तं केचन 'कूपस्तम्भः' इति वदन्ति। तस्य जलं नाम ताडरसः एव। भवती किं कुर्वती अस्ति इति मया यदा पृष्टं तदा सा बालिका उक्तवती यत् धान्यं कुट्टयित्वा तण्डुलं निष्पाद्य पाकार्थं चुल्लेः उपरि स्थापितवती अस्मि, गृहस्य भित्तिं मृत्तिकया लिम्पन्ती अस्मि च इति। 'सुवर्ण'शब्दं सा व्रीह्यर्थे 'रजत'शब्दं च तण्डुलार्थे च प्रयुक्तवती सा। 'जडा बुद्धिहीना' नाम भूमिः। 'सीमाः' नाम भित्तयः। अन्ते सा उक्तवती यत् रूप्यकद्वयोना विंशतिः सञ्चिता। अतः एव पिता लज्जया भवतोः पुरतः न आगतः, दशानां दिनानाम् अनन्तरम् आगमिष्यति इति। 'करौ प्रदर्श्येते' इत्यस्य 'सनमस्कारम् उपस्थीयते' इत्यर्थः। 'दशवारं पार्श्वपरिवर्तनम्' इत्येतेन दश रात्रयः सूचिताः तया'' इति विवरणम् उक्तवान् मन्त्री।

'त्रि-क्षकारात्मकौ भवन्तौ इति उक्तवती खलु सा? तस्य कः अर्थः?'' इति पृष्टवान् राजा।

''आवां रक्षकौ, शिक्षकौ, क्षयकर्तारौ च खलु? त्रिषु शब्देषु अपि क्षकारः अस्ति'' इति हसन् उक्तवान् मन्त्री।

राजा तस्याः बुद्धिमत्याः बालिकायाः उत्तरैः नितरां सन्तुष्टः अभवत्। अनन्तरदिने सः निर्धनम् आनाय्य– ''भवता ऋणं प्रत्यर्पणीयं नास्ति। सुखेन जीवतु भवान्'' इति उक्त्वा सहस्रं रूप्यकाणि दत्तवान्।






हनूमान् सूक्ष्मरूपं प्राप्य पाताललङ्कायाः सिंहद्वारम् अतिक्रम्य नगरस्य प्रवेशं कृतवान्। अग्रे यदा गतं तदा अनतिदूरे कश्चन कोलाहलः श्रुतः। हनूमान् तस्यां दिशि गतवान्।

तत्र काचित् गुहा आसीत्। गुहा एव कालीमन्दिररूपेण परिवर्तिता आसीत्। मन्दिरस्य पुरोभागः तोरणैः दीपादिभिः च विशेषतः अलङ्कृतः आसीत्। महिरावणस्य सेवकाः राक्षसाः मद्येन पूर्णाणि भाण्डानि आनीय स्थापयन्तः आसन्। तेषां गानेन कोलाहलेन च स च समग्रः प्रदेशः व्याप्तः आसीत्।

मन्दिरस्य पुरतः पणवः, आनकं, ढक्का, डमरुः इत्यादीनि वाद्यानि स्थापितानि आसन्। एतत् सर्वं दृष्ट्वा हनूमान् विनायासम् ऊहितवान् यत् प्रातः रामलक्ष्मणौ कालिकामात्रे बलिरूपेण समर्पयितुम् एव एषः सन्नाहः इति।

हनूमान् मक्षिकारूपं धृत्वा कालीमन्दिरस्य छदेः उपरि गतवान्। मन्दिरस्य उपरि अभिषेकार्थं घटेषु विविधानि जलानि स्थापितानि आसन्। मूर्तेः उपरि एकं छिद्रम् आसीत्। तेन छिद्रमार्गेण मक्षिकारूपः हनूमान् गर्भगृहं प्रविष्टवान्।

कालिकामातुः मूर्तिः उन्नता आसीत्, उग्ररूपा चापि आसीत्। हनूमान् मूर्तेः पुरतः स्थित्वा क्रोधमिश्रितेन स्वरेण पृष्टवान्– "अम्ब! किं भवती रामलक्ष्मणयोः बलिम् इच्छति?" इति।

३१. रामलक्ष्मणयोः रक्षणम्।



तदा कालिकामाता सौम्यरूपं धृत्वा हनूमतः पुरतः प्रत्यक्षीभूय— "वत्स! आञ्जनेय! महिरावणस्य मरणकालः सन्निहितः अस्ति। जयशाली भविष्यति भवान्" इति उक्त्वा हनूमन्तम् आशिषा अनुगृह्य अदृश्यतां गतवती।

कालिकादेव्याः एतानि वचनानि श्रुत्वा हनूमान् नितरां सन्तुष्टः। सः मन्दिरस्य गर्भगृहस्य द्वारं पिधाय मूर्तेः पृष्ठतः निलीय स्थितवान्। अग्रे किं प्रवर्तते इति प्रतीक्षमाणः स्थितवान् सः।

महिरावणस्य अन्तःपुरे महान् कोलाहलः श्रूयते स्म। रामलक्ष्मणयोः बलिरूपेण समर्पणस्य अनन्तरं प्रचलिष्यमाणस्य महिरावण-चन्द्रसेनयोः विवाहस्य निमित्तं तत्र सन्नाहः महता वैभवेन प्रचलन् आसीत्। अतःपुरस्य व्यवस्थापिका राक्षसी कण्टकिनी उत्साहेन चन्द्रसेनायाः अलङ्कारे उद्युक्ता आसीत्। मध्ये मध्ये सा चन्द्रसेनां प्रीत्या आलिङ्गन्ती महिरावणस्य यशोगानं श्रावयति स्म।

भवनस्य प्राङ्गणे कोलाहलः आरब्धः। प्रतिमारूपेण स्थापितौ रामलक्ष्मणौ निजरूपेण परिवर्तितौ। अनन्तरं तौ शकटम् आरोप्य शकटस्थे उन्नतस्तम्भे बद्धवन्तः राक्षसाः। तयोः शरीरे जपाकुसुममालाः स्थापिताः आसन्। एतं शकटं सर्पाकारकाः घोराः पिशाचाः वहन्तः आसन्। एवंप्रकारेण शोभायात्रया रामलक्ष्मणौ कालिकामन्दिरं प्रति नीतौ।

राक्षसानाम् उत्साहपूर्णं कोलाहलं श्रुत्वा एव चन्द्रसेना ज्ञातवती यत् किं प्रवर्तमानम् अस्ति इति। साः झटिति उत्थितवती। कण्टकिन्या निरुध्यमाना अपि सा भवनात् निर्गत्य प्राङ्गणम् अतिक्रम्य मार्गम् आगतवती। तदा तया पीतवस्त्रधारी सिन्धूरतिलकधारी बन्धनयुक्तः शकटस्थः रामः दृष्टः। एतत् दृष्टवत्याः चन्द्रसेनायाः दुःखम् उद्गतम्। सा उच्चध्वनिना रोदनं कृतवती। रुदती एव भूमौ पतिता सती मूर्च्छां गतवती।

चन्द्रसेनाम् अनुसृत्य आगता घोरराक्षसी

कण्टकिनी नितरां क्रुद्धा आसीत्। सा मूर्च्छां गतां चन्द्रसेनां कशया ताडितवती। आतृप्ति ताडितवती सा। मूर्च्छां गता चन्द्रसेना एतत् किमपि न जानाति। अन्ते कण्टकिनी चन्द्रसेनाम् उन्नीय स्कन्धे आरोप्य भवनस्य अन्तः नीत्वा प्रकोष्ठे बन्धने स्थापितवती।



कालिकादेव्याः प्रधानार्चिका कण्टकिनी एव आसीत्। अतः सा अभिषेकसन्नाहं द्रष्टुं त्वरया मन्दिरम् उद्दिश्य गतवती। अहिरावणेन महिरावणेन चापि देवीपादतीर्थनाम्ना व्यवह्रियमाणं मद्यं कण्टकिन्याः हस्ततः एव स्वीकरणीयम् आसीत्।

राक्षसाः कालिकादेवीं मद्येन अभिषेक्तुम् उद्युक्ताः अभवन्। यदा उपरिष्टात् रन्ध्रेण मद्यं पतितं तदा हनूमान् आत्मनः शरीरं वर्धयित्वा कालिकादेव्याः स्वरम् अनुकुर्वन् गम्भीरस्वरेण आदिष्टवान्– "इदानीं मद्यस्य अभिषेकेण अलम्। क्षीराभिषेकः प्रवर्ततां नाम" इति।

यदा हनूमान् एवम् उक्तवान् तदा मन्दिरस्य बहिर्भागे स्थितानां कोलाहलः झटिति स्तब्धः। 'देवी किमर्थं मद्याभिषेकं निराकृतवती?' इति परस्परम् आश्चर्येण उक्तवन्तः ते। सोमसूत्रमार्गेण तीर्थकुण्डे पतत् मद्यं सङ्ग्रहीतुं ते पानपात्राणि गृहीत्वा सिद्धाः आसन्।

मद्याभिषेकस्य निराकरणं श्रुत्वा रज्जुभिः बद्धः शाकटस्थः रामः लक्ष्मणं पश्यन् मन्दहासं प्रकटितवान्। कण्टकिनी महिरावणं चिन्तामिश्रितया दृष्ट्या दृष्टवती। महिरावणः नेत्रे विशालीकृत्य आश्चर्येण अहिरावणं दृष्टवान्।

तदा अहिरावणः महिरावणम् उक्तवान्– "सहोदर! आश्चर्यप्राप्तेः नास्ति अवकाशः। रामः लक्ष्मणः च सात्त्विकौ किल! सात्त्विकः आहारः मद्येन मिश्रितः चेत् सारहीनः भवति खलु? अतः तया मद्यं निराकृतं, तावदेव" इति।

"सहोदर! भवतः वचनं युक्तम् अस्ति। प्रतिदिनं भवान् एव देवीपादतीर्थं मद्यं पिबति। अतः देव्याः अन्तरङ्गं भवता एव



स्फुटं ज्ञायते, न अस्माभिः'' इति अहिरावणम् उक्त्वा महिरावणः समीपस्थान् भटान् आज्ञापितवान् यत् क्षीराभिषेकार्थं झटिति व्यवस्था भवतु इति।

राक्षसाः महापात्रैः क्षीरम् आनीय अभिषेकं कर्तुम् उद्युक्ताः अभवन्। हनूमान् तीर्थकुण्डस्य उपरि स्थिते रन्ध्रे मुखं योजयित्वा समग्रं क्षीरं महता सन्तोषेण पीतवान्। क्षीरस्य पानेन तस्य उत्साहः शक्तिः च प्रवृद्धे।

अल्पे एव काले अभिषेकः समाप्तः। महिरावणः उत्साहेन मन्दिरस्य गर्भगृहस्य द्वारस्य समीपं गत्वा साष्टाङ्गं नमकृत्य देवीं प्रार्थितवान्– ''अम्ब! दर्शनदानेन अस्मान् अनुगृह्णातु कृपया'' इति।

झटिति अन्तर्भागतः स्वरः निर्गतः– ''भक्ताग्रेसर! प्रथमं भवान् सहोदरं फलपुष्पादिभिः सहितम् अहिरावणं पूजार्थं प्रेषयतु'' इति।

तदा महिरावणः अहिरावणस्य समीपम् आगत्य उक्तवान्– ''सहोदर! भवद्विषये कालिकामातुः विशेषप्रीतिः। सा आज्ञापितवती अस्ति यत् नैवेद्येन सह भवता अन्तः आगन्तव्यम् इति'' इति।

अहिरावणः पर्वतसदृशं स्वशरीरं कम्पयन्, फलपुष्पाणि नैवेद्यखाद्यानि मधुघृतादीनि च सुवर्णपात्रेषु स्वीकृत्य गर्भगृहस्य द्वारस्य समीपं गत्वा स्थितवान्। हनूमान् द्वारम् उद्घाटितवान्। अहिरावणः यदा अन्तः गतः तदा झटिति द्वारं पिहितम् अभवत्।

यदा अहिरावणः नैवेद्यपदार्थान् भूमौ स्थापयितुम् अवनतवान् तदा हनूमान् विनाशब्दं समीपं गत्वा तं गले गृहीत्वा गलबन्धनपूर्वकं तं मारितवान्। अनन्तरं अहिरावणेन आनीतानि फल-खाद्यादीनि सन्तोषेण खादित्वा मधु आतृप्ति पीतवान्। इदानीं तस्य उत्साहः पूर्वापेक्षया द्विगुणितः जातः।

हनूमान् परितः सकृत् परिशील्य अहिरावणस्य शवं कोणे कुत्रचित् पातितवान्। अनन्तरं पुनः गम्भीरस्वरेण–

"महिरावण! इदानीं रामलक्ष्मणौ अन्तः प्रेषयतु। मम प्रियभक्तः अहिरावणः ताभ्यां मम पूजां प्रथमं कारयतु" इति उक्त्वा द्वारम् उद्घाट्य स्थापितवान् सः।

महिरावणः रामलक्ष्मणौ गर्भगृहस्य अन्तर्भागे नोदितवान्। कालिकामातुः पृष्ठतः स्थितः हनूमान् मन्दस्वरेण उक्तवान्– "रघुवंशवीरौ, प्रथमं द्वारं पिधाय अर्गलेन कीलनीयम्। ततः युद्धार्थं सिद्धाभ्यां भवितव्यम्" इति।

एतानि वचनानि श्रुत्वा लक्ष्मणः आश्चर्येण रामं दृष्टवान्। तदा रामः मन्दहासपूर्वकम् उक्तवान्– "अये लक्ष्मण! वचनस्य तात्पर्यम् अवगतं खलु? द्वारस्य पिधानं करोतु प्रथमम्" इति।

लक्ष्मणः द्वारस्य पिधानं कृतवान्। तदा पुनः वचनं श्रुतम्– "मूर्तेः पृष्ठतः आगच्छताम्" इति।

रामः लक्ष्मणः च यदा मूर्तेः पृष्ठतः गतवन्तौ तदा तत्र हनूमान् दृष्टिगोचरः जातः।

तं दृष्ट्वा तौ नितरां सन्तुष्टौ। लक्ष्मणः यदा आश्चर्येण पश्यन् आसीत् तदा रामः उक्तवान्– "देवी मद्याभिषेकं निराकृत्य यदा क्षीराभिषेकं कर्तुम् आदिष्टवती तदा एव मया ऊहितं यत् गर्भगृहे हनूमान् आगत्य स्थितवान् स्यात् इति" इति।

रामः एतावत् यदा उक्तवान् तदा लक्ष्मणः



सर्वम् अवगतवान्। हनूमान् कालिकामातुः समीपे पूजार्थं स्थापितं धनुर्बाणादिकं रामलक्ष्मणाभ्यां प्रदर्शितवान्। रामलक्ष्मणौ धनुः उन्नीय सज्जीकृतवन्तौ। हनूमान् स्वशरीरं वर्धयित्वा रामलक्ष्मणौ भुजयोः उपरि उपवेश्य मूर्तिसमीपे स्थितान् सर्वान् बाणान् सङ्गृह्य गृहीतवान्।

मन्दिरस्य गर्भगृहात् बहिः राक्षसाः महान्तं कोलाहलं कुर्वन्तः आसन्। ते रामलक्ष्मणयोः बलिं द्रष्टुं समुत्सुकाः आसन्। बलिसमर्पणार्थं निश्चितः मुहूर्तः अत्यासन्नः आसीत्। 'किमर्थम् अहिरावणः रामलक्ष्मणौ बहिः न आनयति?' इति चिन्तयन्तः स्थितवन्तः राक्षसाः।



अल्पे एव काले कण्टकिनी सन्देहं प्राप्तवती यत् गर्भगृहस्य अन्तः अहितं किमपि प्रचलत् स्यात् इति। सा द्वारसन्धिमध्यात् अन्तः दृष्टिं प्रसारितवती। अभिषेकरूपेण समर्पितस्य क्षीरस्य लेशः अपि मूर्तेः उपरि न दृष्टः तया। 'मन्दिरस्य अन्तः कोऽपि शत्रुः आगत्य स्थितः अस्ति' इत्येषः तस्याः संशयः दृढः जातः।

सा मुखं परिवर्त्य राक्षसान् पश्यन्ती उच्चस्वरेण चीत्कारं कृतवती।

तदा राक्षसाः तस्याः समीपं गत्वा पृष्टवन्तः– "किं जातम्? कालिकामाता किं बलिम् इष्टवती?" इति।

तदा कण्टकिनी क्रोधेन तान् पश्यन्ती– "अये मन्दमतयः! सर्वनाशः सम्पन्नः। पश्यताम् अस्माकं महती वञ्चना प्रवृत्ता। गर्भगृहस्य अन्तः कोऽपि शत्रुः प्रविष्टः अस्ति। पाताललङ्काम् अपि विना क्लेशं प्रविष्टवान् सः शत्रुः सामान्यः न स्यात्। सा दुष्टा वराकी चन्द्रलेखा अस्माकं रहस्यं शत्रून् निवेदितवती इति भाति। कशाया सम्यक् प्रहृतं चेदेव सा सत्यं वदेत्, नान्यथा" इति उक्त्वा चन्द्रलेखायाः प्रकोष्ठस्य दिशि धावितवती।

कण्टकिन्याः वचनं श्रुत्वा राक्षसाः आश्चर्येण परस्परं मुखं दृष्टवन्तः। 'कण्टकिन्या यथा उक्तं तथा कोऽपि शत्रुः किम् अन्तः प्रविष्टः स्यात्? महाशक्तिशालिनः महिरावणस्य शासने कथं कोऽपि शत्रुः पाताललङ्कां प्रवेष्टुं शक्नुयात्? तादृशः प्रबलः शत्रुः सः कः स्यात्?' इति चिन्तयन्तः स्थितवन्तः ते।

एवं चिन्तयत्सु राक्षसेषु केचन धैर्यवन्तः अग्रे गत्वा गर्भगृहस्य अन्तः दृष्टिं प्रसारितवन्तः। यावत् ते द्वारम् उद्घाटयितुं हस्तेन स्पृष्टवन्तः तावता एव हनूमान् घोरं हूङ्कारं कुर्वन् वेगेन द्वारम् उद्घाटितवान्, बलात् तत् पातितवान्, ततः बहिः आगतवान् च।

हनूमन्तं दृष्ट्वा राक्षसाः क्रोधेन भीत्या च चीत्कारं कृतवन्तः। 'वञ्चना! महती वञ्चना!' इति आक्रोशनं कृतवन्तः च।

हनूमतः स्कन्धयोः उपरि स्थितौ रामलक्ष्मणौ आश्चर्येण दृष्टवन्तः राक्षसाः।

तदा रामलक्ष्मणौ निरन्तरं बाणवर्षणं कृतवन्तौ। राक्षसाः च हाहाकारं कुर्वन्तः भूमौ पतितवन्तः।

कालिकामन्दिरस्य पुरतः स्थित्वा प्रधानानुचरैः सह वार्तालापं कुर्वन् स्थितः महिरावणः अकस्मात् हनूमन्तं, तस्य स्कन्धयोः उपरि उपविष्टौ रामलक्ष्मणौ च दृष्ट्वा महान्तं क्रोधं प्राप्तवान्। झटिति धनुर्बाणादिकं गृहीत्वा सः युद्धार्थं सन्नद्धः जातः।

रामलक्ष्मणौ द्विगुणितम् उत्साहं प्राप्य महिरावणम् उद्दिश्य बाणान् प्रयुक्तवन्तौ। बाणप्रहारं प्राप्य अपि अविचलं स्थितवान् महिरावणः।

महिरावणस्य शरीरात् यथा यथा रक्तबिन्दवः पतिताः तथा तथा नूतनाः महिरावणाः भूमितः उत्पन्नाः। ते नूतनाः महिरावणाः वास्तविकमहिरावणः इव एव सन्तः रामलक्ष्मणौ उद्दिश्य बाणान् प्रयोक्तुम् उद्युक्ताः अभवन्।

रामलक्ष्मणौ एतत् दृष्ट्वा आश्चर्यम् अनुभवन्तौ हनूमन्तम् उक्तवन्तौ– "आञ्जनेय! किम् एतत् प्रवर्तते? भूमौ पतितात् महिरावणस्य एकैकस्मात् रक्तबिन्दोः अपि तत्सदृशः अन्यः उत्पद्यते खलु? कथम् एतत्? रक्तपातं विना महिरावणस्य संहारः कथं वा कर्तुं शक्यः?" इति।

तावता हनूमान् सुवर्चलायाः वचनं, चन्द्रलेखां च स्मृतवान्। अनन्तरं सः वस्तुस्थितिं द्वित्रैः वाक्यैः रामलक्ष्मणौ उक्त्वा तौ उन्नीय आकाशमार्गम् आश्रितवान्।

उन्नते कस्मिंश्चित् स्थले रामलक्ष्मणौ उपवेश्य वायुवेगेन हनूमान् चन्द्रलेखायाः प्रकोष्ठम् उद्दिश्य गतवान्। रामलक्ष्मणौ तु लक्षशः उत्पद्य युद्धं कुर्वतः महिरावणान् उद्दिश्य दूरात् एव बाणप्रयोगं कुर्वन्तौ स्थितवन्तौ।





# राक्षसमन्त्री

अमरवर्मा नाम राजा पूर्वम् आसीत्। कदाचित् तस्य मनसि चिन्तनम् आगतं यत् अहं चक्रवर्ती भवेयम् इति। अतः सः मन्त्रिणं धर्मचिन्तनम् आहूय आदिष्टवान् यत् युद्धार्थं सन्नाहः करणीयः इति।

मन्त्री एतत् निराकुर्वन् उक्तवान्– "प्रभो, युद्धतः धनस्य, मानस्य, जनानां प्राणानां च हानिः भवति। शत्रुभयं वर्धिष्यते। राज्ये अशान्तिः क्षामः च प्रसरिष्यति। एवं शान्तेः भङ्गस्य कारणस्य युद्धस्य विचारः भवता परित्यक्तः चेदेव वरम्" इति।

अमरवर्मणे मन्त्रिणः एषः उपदेशः न अरोचत। अतः सः धर्मचिन्तनं मन्त्रिपदवीतः च्युतं कृतवान्। अवकाशवर्मनामकं कञ्चित् दायादं मन्त्रिपदे नियोजितवान् च। अनन्तरं, चक्रवर्तित्वं प्राप्तव्यम् इति या इच्छा आसीत् ताम् अवकाशवर्माणं निवेदितवान् च।

अवकाशवर्मणः मनसि बहोः कालतः इच्छा आसीत् यत् केनापि उपायेन सिंहासनारोहणं करणीयम् एव इति। एतदर्थं सः अवकाशं प्रतीक्षमाणः आसीत्।

अतः राज्ञः आशयं पुरस्कुर्वन् उक्तवान् सः– "प्रभो, भवतः मुखे चक्रवर्तिलक्षणानि स्फुटं दृश्यन्ते। अतः भवान् चक्रवर्ती भविष्यति इत्यत्र नास्ति सन्देहः। किन्तु अस्माकं प्रतिवेशिनः राजानः अस्मदपेक्षया बलशालिनः सन्ति। अस्माकं सैन्यबलं नितराम् अत्यल्पम्। अन्यच्च एतादृशेषु कार्येषु दैवबलम् अपि अत्यावश्यकम्। अस्माकं राज्यस्य सीमाप्रदेशे प्रलयपर्वते प्रलयमुनिः नाम कश्चन संन्यासी निवसति इति श्रूयते। भवान् तस्य समीपं गत्वा तस्य आशीर्वादं यदि प्राप्नुयात् तर्हि भवतः इष्टम् अचिरात् एव सिध्येत्" इति।



प्रलयपर्वते प्रलयः नाम राक्षसः आसीत्। सः नितरां क्रूरः आसीत्। तस्य शापः आसीत् यत् यावत् राज्ञः अनुमतिः न प्राप्यते तावत् कोऽपि देशः प्रवेष्टुं न शक्यः इति। राजा एतां वार्तां जानाति स्म।

अतः राजा अवकाशवर्माणम् उक्तवान्– "मन्त्रिवर्य! मया प्रलयमुनेः नाम एव न श्रुतम्। प्रलयनामकः राक्षसः तत्र निवसति इति तु जानामि। यदि अहं प्रलयपर्वतं गच्छेयं तर्हि मम प्राणानां हानिः स्यात् खलु?" इति।

"प्रभो, वस्तुस्थितिः अन्या एव अस्ति। तस्मिन् पर्वते मुनिः एव निवसति, न तु राक्षसः। किन्तु जनाः आगत्य तपसि विघ्नं न कुर्युः इति उद्देशेन तेन मुनिना एव प्रलयराक्षसः अस्ति इति मिथ्यावार्ता प्रसारिता। मया एतत्सर्वं प्रलयमुनेः कस्माच्चित् शिष्यतः ज्ञातम्। तेन शिष्येण एतदपि उक्तम् अस्ति यत् तं पर्वतं राजा केवलं गन्तुं शक्नोति, न तु सामान्यः इति। अतः भवता धैर्येण प्रलयपर्वतः गन्तव्यः। चक्रवर्तित्वप्राप्त्यर्थं या अपूर्वशक्तिः आवश्यकी तां प्राप्य प्रत्यागन्तव्यम्" इति उक्तवान् अवकाशवर्मा।

अमरवर्मा राज्यशासनभारं मन्त्रिणः उपरि निक्षिप्य प्रलयपर्वतम् उद्दिश्य निर्गतवान्। 'इतः परं राजा न प्रत्यागमिष्यति। अहम् एव राजा भविष्यामि' इति सन्तोषं प्राप्तवान् अवकाशवर्मा।

राजा अमरवर्मा बहूनि कष्टानि सहमानः प्रलयपर्वतं प्राप्तवान्। श्रान्तिपरिहारार्थं कस्यचित् वृक्षस्य अधः उपविष्टवान् च। तत्समये कश्चन घोरः राक्षसः तस्य पुरतः प्रत्यक्षः अभवत्। तस्य समग्रं शरीरं रोमभिः आवृतम् आसीत्। नेत्रे तप्ताङ्गारे इव रक्ते आस्ताम्। दीर्घं श्मश्रु आसीत् तस्य।

अवकाशवर्मणः वचने पूर्णतः विश्वासं कृतवान् आसीत् राजा। अतः राक्षसं दृष्ट्वा अपि सः भीतिं तु न प्राप्तवान्। तं साष्टाङ्गं नमस्कृत्य उक्तवान् राजा– "मुनीश्वर! अहम् एतस्य देशस्य राजा। मम नाम अमरवर्मा इति। एतं विचित्रवेषं परित्यज्य वास्तविकरूपेण प्रत्यक्षीभूय मम इच्छापूर्तिं-

कृत्वा अहम् अनुग्रहणीयः इति प्रार्थये" इति।

एतत् श्रुत्वा राक्षसः आश्चर्येण क्षणकालं स्तब्धः। सः राजानं परीक्षादृष्ट्या दृष्ट्वा हुङ्कुर्वन्– "राक्षसे अपि मुनित्वं पश्यतः भवतः दृष्टिशक्तिः अपूर्वा एव। किन्तु अहं राक्षसः एव, न तु मुनिः। भवान् राजा खलु? अतः मम एकः नियमः भवता अङ्गीक्रियते चेत् भवन्तं सजीवं त्यजामि। भवता अहं मन्त्रिस्थाने नियोजनीयः। मम अनुमतिं विना किमपि कार्यं न करणीयम्। एतत् अङ्गीकृत्य माम् आत्मना सह नयतु। अन्यथा भवन्तं खादित्वा मम बुभुक्षां शमयिष्यामि" इति उक्तवान्।

इदानीं किं करणीयम् इति न ज्ञातं महाराजेन। 'एषः राक्षसः एव, न तु मुनिः। यदि एतस्य नियमः अङ्गीक्रियते तर्हि आजीवनं कष्टम् अनुभोक्तव्यम्। न अङ्गीक्रियते चेत् सद्यः एव प्राणहानिः। किं करणीयम् इदानीम्' इति चिन्तयन् स्थितवान् राजा।

चिन्तयन्तं राजानं मुष्ट्या गृहीत्वा स्वमुखस्य समीपं नीत्वा उक्तवान् राक्षसः– "किमर्थं मौनम्? महती बुभुक्षा मम। स्वीकारम् अस्वीकारं वा झटिति सूचयतु तावत्" इति।

गुहासदृशे राक्षसमुखे अजगरसदृशीं जिह्वां दृष्ट्वा राजा नितरां भीतः। सः झटिति उक्तवान्– "बलशाली भवान् मम मन्त्री



भवति चेत् मम लाभः एव। अतः भवतः प्रस्तावः अनुमतः। किन्तु मम तु चिन्ता यत् घोराकारं भवन्तं कथं वा आत्मना सह नयेयम् इति" इति।

"यदा अहम् इच्छामि तदा रूपं परिवर्तयितुं सामर्थ्यम् अस्ति मम। मम वशत्वं प्रथमम् अङ्गीकरोतु भवान्" इति उक्तवान् राक्षसः।

"मम मन्त्रित्वम् एव किमर्थम् इच्छति भवान्? मां मारयित्वा राजत्वम् एव प्राप्तुं शक्यते खलु? तत् किमर्थं न इच्छति भवान्?" इति पृष्टवान् राजा।

क्षणकालस्य मौनस्य अनन्तरम् उक्तवान् राक्षसः– "मम कश्चन शापः अस्ति। तस्य कारणतः अहं कस्यापि राज्ञः अनुमतिं विना



किमपि राज्यं प्रवेष्टुं न शक्नोमि। अतः अहं भवन्तम् अमारयन् भवतः अङ्गीकारं प्रार्थयन् अस्मि। मन्त्रित्वम् एव भवता किमर्थम् इष्टम् इति भवता प्रश्नः कृतः। प्रजानां हितस्य रक्षणं राज्ञः दायित्वं भवति। राज्ञः हितस्य रक्षणं तु मन्त्रिणः दायित्वं भवति। अहं भवतः हितस्य रक्षणं तु विनायासं कुर्याम्। किन्तु प्रजानां हितस्य रक्षणे महान् क्लेशः अस्ति। राजा भवान् यदा मदधीनः भवति तदा यदि प्रजानाम् अहितं किमपि सिध्येत् तर्हि तस्य उत्तरदायी भवान् एव, न तु अहम्'' इति।

एतत् श्रुतवतः राज्ञः मनसि विचारः आगतः— ''राक्षसस्य शक्तिः अपारा। ततः मम प्राणहानिः अपि नास्ति, प्रत्युत सः मम हितरक्षकः मन्त्री भविष्यति। एतेन मम लाभः एव। अवकाशं प्राप्य अहम् एतस्य साहाय्येन चक्रवर्ती अपि भवितुं शक्नुयाम्'' इति। अतः राजा राक्षसस्य नियमम् अङ्गीकृतवान्।

राक्षसः अनन्तरक्षणे एव मानवरूपं प्राप्तवान्। अनन्तरं राजा राक्षसः च राजधानीं गतवन्तौ।

तत्काले राजधान्याम् अवकाशवर्मा घोषितवान् आसीत् यत् राज्ञः मरणं जातम् इति। आत्मनः सिंहासनारोहणार्थं सः सन्नाहं कुर्वन् आसीत्। यदा प्रत्यागतः राजा तेन दृष्टः तदा सः क्षणकालं स्तब्धः। आश्चर्यवशात् एकम् अपि वचनं तस्य मुखात् न निर्गतम्। राजा अवकाशवर्माणं क्रोधेन पश्यन् उक्तवान्— ''अये विश्वासघातक! भवता यः अपराधः कृतः तस्य कीदृशः दण्डः भवेत् इति जानाति वा भवान्?'' इति।

अत्रान्तरे मन्त्री राज्ञः अग्रिमं वचनं स्थगयन्— ''प्रभो, इतः परं कोऽपि देशे यदि दोषं कुर्यात् तर्हि तस्य अपराधस्य निर्णयः भवतः। किन्तु अपराधिनः दण्डनं तु अहं करिष्यामि। एतं राजद्रोहिणं केन दण्डेन दण्डयामि इति पश्यतु तावत्'' इति उक्त्वा स्वशरीरं वर्धयित्वा अवकाशवर्माणं मुष्ट्या गृहीत्वा मुखे स्थापितवान्। खादनस्य अनन्तरं पुनः मानवरूपेण स्थितवान्। एतत्सर्वं दृष्ट्वा तत्र स्थिताः सर्वे हाहाकारं

कृतवन्तः।

राक्षसमन्त्रिणः एतादृशम् अमानुषं व्यवहारं दृष्ट्वा राजा अपि नितरां भीतः। अग्रे घोरः परिणामः द्रष्टव्यः भवेत् इति चिन्तितवान् राजा। राज्ञा यथा चिन्तितं तथैव प्रवृत्तम् अपि। अल्पस्य अपराधस्य निमित्तं यः अपराधी इति घोष्यते तं विना दयां खादति स्म राक्षसः। एतस्य परिणामतः देशे अपराधाः स्थगिताः अभवन्। यदि कोऽपि अल्पः अपराधः घटितः स्यात् तर्हि अपि जनाः परस्परं सम्भूय न्यायनिर्णयं कुर्वन्ति स्म। तदर्थं राज्ञः समीपं तु न आगच्छन्ति स्म।

एवम् एव कानिचन दिनानि अतीतानि। एकदा राक्षसमन्त्री राजानम् उक्तवान्– "प्रभो, प्रजाः यदि अपराधं न कुर्युः तर्हि मया भोजनम् एव न प्राप्यते। मत्तः भीताः जनाः न्यायनिर्णयार्थं भवत्समीपं न आगच्छन्ति। अतः आवाम् एव जनानां मध्ये गच्छाव। भवान् अपराधानां निर्णयं करोतु। अपराधिनः खादित्वा अहं मम बुभुक्षां निवारयिष्यामि" इति।

एषः प्रस्तावः राज्ञे न अरोचत। अतः सः मन्त्रिणम् अन्यम् उपायं सूचितवान्– "भवतः पूर्णोदरं भोजनं यथा प्राप्येत तथा कञ्चन उपायं करवाव आवाम्। आवां मिलित्वा प्रतिवेशिराज्यस्य उपरि आक्रमणं करवाव। जयः अस्माकं भविष्यति। बन्दिरूपेण ये शत्रुसैनिकाः प्राप्यन्ते तेषु



प्रतिदिनम् एकैकं खादन् भवान् कानिचन वर्षाणि यावत् बुभुक्षां निवारयितुं शक्नुयात्" इति।

राक्षसमन्त्री एतत् अङ्गीकृतवान्। राजा झटिति प्रतिवेशिराज्यस्य उपरि आक्रमणं घोषितवान्। देशद्वयस्य अपि सैन्यं रणाङ्गणे अभिमुखं स्थितम्। प्रतिवेशिराजस्य धर्मसेनस्य सैन्यम् अपारम् आसीत्। किन्तु अमरवर्मणः सैन्यम् अल्पं चेदपि तस्य मध्ये महावटवृक्षः इव घोरः राक्षसः स्थितः आसीत्। तं दृष्ट्वा एव धर्मसेनस्य सैनिकाः भीत्या पलायनं कर्तुम् उद्युक्ताः अभवन्।

तदा अमरवर्मा धर्मसेनम् उक्तवान्– "मम समीपे सैनिकबलं राक्षसबलं चापि



अस्ति। यदि युद्धं प्रियं न स्यात्, यदि च स्वस्य प्रजानां च प्राणानां रक्षणं प्रियं स्यात् तर्हि मम सामन्तत्वम् अङ्गीकरोतु। अन्यथा सर्वनाशं सम्मुखीकर्तुं सिद्धः भवतु'' इति।

धर्मसेनः उत्तरं किमपि न उक्तवान्। प्रत्युत स्वसेनाम् आज्ञापितवान् यत् सर्वैः प्रतिगन्तव्यम् इति। पलायनरतं धर्मसेनं तत्सैन्यं च दृष्ट्वा राजा अमरवर्मा विकटाट्टहासं प्रदर्शितवान्।

तत्समये भूतपूर्वः मन्त्री धर्मचिन्तनः तत्र आगतवान्। राजानम् अमरवर्माणम् उक्तवान् च– ''प्रभो, इतोऽपि अग्रे न गन्तव्यं भवता। धर्मसेनस्य युक्तिः भवता न ज्ञाता इति भाति। अग्रे गमनम् अपायकरम्'' इति।

''मत्तः भीत्या पलायनं कर्तुम् उद्युक्तात् भीरुतः मम का भीतिः? भवान् भ्रष्टमतिः तु न खलु?'' इति धर्मचिन्तनं पृष्टवान् राजा।

''प्रभो, किञ्चित् चिन्तितं चेत् सर्वं सुस्पष्टं ज्ञायते। भवान् इदानीं स्वस्य देशस्य सीमाप्रदेशे अस्ति। धर्मसेनः चातुर्येण व्यवहरन् स्वसेनां स्वस्य देशस्य सीमाभागस्य अन्तः नीतवान् अस्ति। शापयुक्तेन भवतः राक्षसमन्त्रिणा तस्य देशः प्रवेष्टव्यः चेत् तदीया अनुमतिः प्रथमं प्राप्तव्या। अन्यथा राक्षसमन्त्रिणा विना भवता भवत्सेनया च तदीयं राज्यं प्रवेष्टव्यम्। राक्षसमन्त्रिणा रहितं भवन्तं विनायासं जेतुम् अर्हति धर्मसेनः। यदि भवतः पराजयः स्यात् तर्हि एतस्य देशस्य अपि राजा धर्मसेनः एव भविष्यति। राज्ञः अनुमतिं विना राक्षसः एतद्देशे स्थातुं न अर्हति। एवम् उपायेन राक्षसपीडां निवारयन् अस्ति धर्मसेनः। अतः कृपया भवतः प्रतिगमनम् एव उचितम् इति मम निवेदनम्'' इति उक्तवान् भूतपूर्वः मन्त्री धर्मचिन्तनः।

इदानीम् अमरवर्मणा वस्तुस्थितिः ज्ञाता। 'राक्षसमन्त्रिणः साहाय्येन प्रतिवेशिराजानां स्वाधीनीकरणम् अशक्यम्' इति ज्ञातवतः तस्य हताशभावना अशान्तिः च प्रवृद्धा। सः धर्मचिन्तनं पृष्टवान्– ''श्रीमन्! इदानीं किं करणीयं मया? यदि शत्रुसैनिकाः न प्राप्येरन्

तर्हि एषः राक्षसः मम प्रजाः एव खादेत्। एतस्मात् विषवृत्ततः मम मोक्षः कथम्?'' इति।

तदा धर्मचिन्तनः उक्तवान्– ''प्रभो, 'प्रतिवेशिराजाः जेतव्याः' इति राज्ञः इच्छा एव राक्षसस्य शक्तिः इति, प्रजाः अपराधं यत् कुर्वन्ति तदेव राक्षसस्य भोजनम् इति च एतावता अस्माभिः ज्ञातम् अस्ति। राक्षसस्य कारणतः एव एषा वस्तुस्थितिः ज्ञाता। भवान् इदानीं राक्षसम् आज्ञापयतु यत् अस्मद्देशं परित्यज्य गन्तव्यम् इति। तदा सर्वं सुखान्तं भविष्यति'' इति।

राज्ञे मन्त्रिणः सूचना अरोचत। सः राक्षसम् आदिष्टवान् यत् देशं परित्यज्य गच्छतु इति। तदा क्रुद्धः राक्षसः राजानं ग्रहीतुम् आगतवान्। राज्ञः अपायं दृष्ट्वा समग्रा सेना राक्षसस्य उपरि आक्रमणम् अकरोत्। एतत् दृष्ट्वा भीतः राक्षसः शिरः अवनमय्य ततः वेगेन गतवान्। प्रलयपर्वतं प्रति धावितवान् च।

एतत् दृष्ट्वा अमरवर्मा नितरां सन्तुष्टः। सः धर्मचिन्तनम् उक्तवान्– ''मन्त्रिवर्य! भवद्विषये मया अन्याय्यम् आचरितम्। क्षन्तव्यः अहम्'' इति।

तदा अमरवर्माणं नमस्कृत्य धर्मचिन्तनः उक्तवान्– ''प्रभो, मानवः यदा अन्तःकलहे आसक्तः भवति तदा राक्षसबलं वर्धते। यदा सर्वे सम्भूय व्यवहरन्ति तदा तु राक्षसशक्तिः पराजिता भवति। राक्षसशक्तेः सम्मुखीकरणार्थं राज्ञा स्वसैन्यबलम् उपयोक्तव्यम्, न तु राज्यविस्तारणार्थम्। इदानीं वा भवान् चक्रवर्तित्वप्राप्तीच्छां परित्यजतु। राज्ये मानवरूपेण स्थितान् राक्षसान् निगृह्णन् प्रजाः पालयतु। प्रजाहितम् एव भवतः आद्यं कर्तव्यं भवतु'' इति।

राजा पुनरपि धर्मचिन्तनं मन्त्रिपदे नियोजितवान्। मन्त्रिणः मार्गदर्शनस्य अनुगुणं राज्यं परिपालयन् उत्तमां कीर्तिं सम्पादितवान् च।



# र स वा र्ताः




## भूकम्पात् अकम्पन्त शङ्कुभवनानि

इतिहासे ऐदम्प्राथम्येन ईजिप्ट्देशीयानि शङ्कुभवनानि भूकम्पात् कम्पितानि अभवन्। अपूर्वविषयेषु अन्यतमानि इति एतानि भवनानि प्रसिद्धानि सन्ति। वास्तुशिल्पदृष्ट्या अपि एतेषां महत्त्वम् अपूर्वम्। महाराजानां शवस्तूपः इति, देवताराधनस्थलम् इति च एतानि ख्यातानि सन्ति। गते अक्टोबर्मासे १९ दिनाङ्के कौरोनगरे यः भूकम्पः प्रवृत्तः तस्य परिणामतः खुफू-खियेप्स्-शङ्कुभवनयोः उपरितनभागाः हानिग्रस्ताः जाताः। षडट्टमितयोः अतिप्राचीनयोः सक्कारा-चेप्रेनुनामकयोः शङ्कुभवनयोः काश्चन शिलाः पतिताः। एतेषां शङ्कुभवनानाम् इतोऽपि अधिका हानिः यथा न भवेत् तथा क्रमाः आश्रियमाणाः सन्ति ईजिप्ट्सर्वकारेण।



## अत्यधिकः वृष्टिपातः

अत्यधिकः वृष्टिपातः प्रपञ्चे कुत्र जातः इति भवन्तः जानन्ति वा? मेघालयस्थे चिरापुञ्जिप्रदेशे इति वदन्ति वा भवन्तः? तथा चेत् भवताम् उत्तरं दोषपूर्णम्। १९८५ वर्षान्तं यावत् चिरापुञ्जिप्रदेशे प्रातिवार्षिकः अत्यधिकवृष्टिपातः नाम ११,३१४ मि.मी. मितः आसीत्। किन्तु अनन्तरं हवायिदेशस्य वैलोलुप्रदेशे ११,४३८ मि.मी. वृष्टिः जाता। एतस्मिन् वर्षे ज्ञातं यत् चिरापुञ्जितः १० कि.मी. दूरे स्थिते मासिन्रामुप्रदेशे ततोऽपि अधिका वृष्टिः, तन्नाम– ११,८७३ मि.मी. वृष्टिः जाता इति। एतस्मिन् प्रदेशे वर्षे १५० दिनानि यावत् वृष्टिः भवति इति श्रूयते। १९५२ तमे वर्षे जुलैमासे १० दिनाङ्के एकस्मिन् एव दिने अत्र ९८९.६ मि.मी. वृष्टिः जाता। एकदिनाभ्यन्तरे एतावती वृष्टिः देशे अन्यत्र कुत्रापि न जाता।

एवं बहुपूर्वं स्थिता अधिकवृष्टिसम्बन्धिनी भारतीया कीर्तिः अमेरिकादेशेन वशीकृता आसीत्। किन्तु सद्यःकाले प्राप्तानां प्रमाणानाम् आधारेण सा कीर्तिः भारतेन पुनः स्वायत्तीकृता अस्ति।

## अन्यग्रहवासिनां कण्ठस्वरार्थं यत्नः

अमेरिकादेशे स्थितया 'नासा'(NASA) नामिकया अन्तरिक्षसंशोधनसंस्थया क्यालिफोर्नियासमीपे मोजाप्मरुभूमौ ३४ मीटर् विशाला 'डिश् एण्टेना' प्रतिष्ठापिता। एतद्द्वारा दूरग्रहेषु स्थितानां जीविनां कण्ठस्वरः कोऽपि श्रूयेत वा इति अहोरात्रं परिशीलनं कुर्वन्तः सन्ति विज्ञानिनः। यदि यन्त्रेण कोऽपि ध्वनिः गृह्येत, तस्य ध्वनेः तात्पर्यं च यदि ज्ञायेत तर्हि जगतः बहिः स्थितानां जीविनां विषये किमपि ज्ञायेत। नासाविज्ञानिनः कदा अन्यलोकीयानां ध्वनिं शृणुयुः इति तु न ज्ञायते।





# महामल्लः

कर्णाटकराज्यं पूर्वं कृष्णदेवः नाम राजा पालयन् आसीत्। तस्य मन्त्री रामशर्मा। राज्ञः आस्थाने विविधाः पण्डिताः यथा, तथैव बहवः मल्लाः अपि आसन्।

कदाचित् महामल्लः नाम कश्चन मल्लः राजास्थानम् आगतवान्। तस्य महान् गर्वः अपि आसीत् यत् मां पराजेतुं समर्थः मल्लः लोके कोऽपि नास्ति इति। सः गर्वेण पदानि स्थापयन् आस्थानं प्रविष्टवान्। राजा तम् उचिते आसने उपवेशितवान्। स्वपरिचयं निवेद्य महामल्लः राजानम् उक्तवान्– "राजन्! यदि भवतः राज्ये कोऽपि समर्थः मल्लः स्यात् तर्हि तम् आनाययतु। यदि सः मां पराजयेत् तर्हि अहं मया प्राप्तानि सर्वाणि प्रशस्तिपत्राणि तस्मै समर्प्य गच्छेयम्। यदि सः पराजयं प्राप्नुयात् तर्हि भवता मह्यं प्रशस्तिपत्रं दातव्यम्" इति।

एतत् वचनं श्रुत्वा आस्थानस्थाः सर्वे क्षणकालं चकिताः। किम् उत्तरं वक्तव्यम् इति न ज्ञातवान् राजा। तावता मन्त्री उत्थाय उक्तवान्– "मल्लवर्य! अस्माकम् आस्थानमल्लं चण्डप्रचण्डदोर्दण्डमायामल्लं सम्मुखीकर्तुं समर्थः लोके कोऽपि नास्ति इति तु सर्वे जानन्ति। सद्यः तु सः नगरे नास्ति। त्रिचतुर्णां दिनानाम् अनन्तरं सः प्रत्यागच्छेत्। तदा भवतोः मल्लयुद्धं प्रचलतु नाम" इति।

महामल्लस्य वसत्यर्थं योग्या व्यवस्था कृता। मन्त्रिणः वचनं महामल्लस्य हृदये प्रतिध्वनत् आसीत्। अतः सः कञ्चित् सेवकं पृष्टवान्– "भवतां मायामल्लः कीदृशः?" इति।

"अस्माकं मायामल्लः असामान्यः। सर्वदा योगसाधनरतः भवति सः। यदा अनिवार्यता

भवति तदा सः देशस्य मानरक्षणार्थं मल्लाङ्गणं प्रविशति। वज्रकायः सः" इति उक्तवान् सेवकः।

अनन्तरदिने महामल्लस्य विश्रान्तिगृहस्य समीपे एव अपरं विश्रान्तिगृहं निर्मितम्। तस्य प्रवेशद्वारम् अत्युन्नतं सुविशालं च आसीत्। एतत् दृष्ट्वा महामल्लः सेवकान् आश्चर्येण पृष्टवान्– "किमर्थम् एतत्?" इति।

तदा कश्चन सेवकः उक्तवान्– "अस्माकं मायामल्लवर्यस्य विश्रान्त्यर्थं निर्मितं गृहम् एतत्। मायामल्लवर्यस्य औन्नत्यं स्थौल्यं च असदृशम्। अतः एतादृशं विशिष्टं द्वारं निर्मितम् अस्ति" इति।

अत्रान्तरे तत्र आगतः मन्त्री सेवकान् आदिष्टवान्– "एतस्य गृहस्य भूमिं काष्ठखण्डैः बहुधा सन्ताड्य दृढीकुर्वन्तु। अन्यथा यदा मायामल्लवर्यः अत्र पदानि स्थापयिष्यति तदा गर्ताः निर्मिताः स्युः" इति। पुनः अल्पे एव काले महाभाण्डेषु मायामल्लस्य निमित्तं क्षीरं, नवनीतं, वातामफलानि, अण्डानि च आनीय स्थापितानि।

महामल्लः एतत्सर्वं पश्यन् आसीत्। अनन्तरदिने प्रातः एव अष्टभिः अश्वैः उह्यमानः रथः विश्रान्तिगृहस्य समीपे उपस्थितः। राजपरिवारजनाः उच्चैः जयघोषं कुर्वन्ति स्म– 'चण्डप्रचण्डदोर्दण्डः मल्लाधिमल्लः मायामल्लः जयतात्' इति। मायामल्लस्य स्वागतार्थं राजा स्वयम् उपस्थितः आसीत्।

अल्पे एव काले कश्चन राजभटः आगत्य राजानं निवेदितवान्– "महाप्रभो, महामल्लः विश्रान्तिगृहे नास्ति। रक्षकाः कथयन्ति यत् किञ्चित्कालात् पूर्वं सः विना वचनं मौनं निर्गतः इति" इति।

तदा मन्त्री मन्दहासपूर्वकम् उक्तवान्– "महाराज! मायामल्लस्य निमित्तं कृतं सन्नाहादिकं दृष्ट्वा एव महामल्लः पलायितः। अस्माकं मानः रक्षितः" इति।



# प्रकृतिवैचित्र्याणि

## परस्परं साहाय्यम्



पशवः स्वशरीरस्य उपरि आपतन्तीः मक्षिकाः कृमिकीटान् च निवारयितुं पुच्छस्य उपयोगं कुर्वन्ति। किन्तु दीर्घम् अपि पुच्छं समग्रशरीरस्य सर्वान् भागान् स्प्रष्टुं न शक्नोति खलु? अतः पशुः अपरपशोः पार्श्वे तिष्ठति। परस्परं पुच्छं चालयन्तौ तौ परस्परयोः मक्षिकादिदंशनं निवारयतः। स च अपरः पशुः तज्जातीयः एव भवति, न तु अन्यजातीयः।

## सस्यानि निद्रान्ति अन्धकारे!



मानवाः यथा प्रातः उत्थाय रात्रौ निद्रां कुर्वन्ति तथैव कानिचन सस्यानि अपि रात्रौ निद्रां कुर्वन्ति। तादृशानां सस्यानां पुष्पाणि दिने विकसितानि भवन्ति। रात्रौ च मुकुलीभवन्ति। एतेषाम् एव सस्यानाम् उपरि रात्रौ प्रकाशः पातितः चेत्, दिने अन्धकारः कल्पितः चेत् च एतानि प्रकाशे विकासम्, अन्धकारे मुकुलितत्वं च प्रदर्शयन्ति।

## सुदीर्घं जीवितम्!



जीवराशौ दीर्घजीविनः प्रायः मानवाः एव। किन्तु केचन जीविनः मानवानाम् अपेक्षया अपि अधिककालं जीवन्ति। समुद्रस्थः 'रत्नभोगी'(सी अनिमोन्) नामकः जीवी अन्यतमः। स्पाञ्ज्जीवी अपि शताधिकवर्षाणि यावत् जीवति। एतस्य दीर्घायुष्यस्य रहस्यम् अस्ति यत् एतस्य शरीरे मृताः अपि जीवकणाः पुनः उज्जीविताः भवन्ति!

# चित्रशीर्षिका-स्पर्धा * पारितोषिकं १००/- रूप्यकाणि

## विजितां शीर्षिकां एप्रिल्-९३ मासे प्रकटयिष्यामः।



M. Natarajan



M. Natarajan

*उपरितनं चित्रद्वयं पश्यन्तु। *युक्तां शीर्षिकां परस्पर-सम्बन्धि-वाक्यद्वयेन लिखित्वा फेब्रवरी-२० दिनाङ्कतः पूर्वम् एव प्रेषयन्तु। *अनन्तरम् आगताः शीर्षिकाः न परिशीलयिष्यामः। *स्पर्धायां विजेता १००/- रूप्यकात्मकं पारितोषिकं प्राप्स्यति। *शीर्षिकाः समपत्रे (पोस्ट्-कार्ड्) लेखनीयाः। तत्र अन्यः विषयः न लेखनीयः। *अधोनिर्दिष्ट-सङ्केताय शीर्षिकाः प्रेषणीयाः—

**चन्दमामा (संस्कृतम्) 'अक्षरम्', ८ उपमार्गः, II घट्टः, गिरिनगरम्, बेङ्गलूरु-५६००८५**

---

## 'डिसेम्बर्'मासस्य चित्रशीर्षिकास्पर्धायाः परिणामः—

प्रथमचित्रम् - **किं तथा सादरं वृद्धा शृणोति श्रद्धयान्विता?**

द्वितीयचित्रम् - **किमेतदिति साश्चर्यं वीक्षते बालको मुदा।**

प्रेषिका - जि. कौसल्या, ७७/२ न्यू स्ट्रीट्, मैलापुरम्, मद्रास्-६००००४




**Printed by B.V. REDDI at Prasad Process Private Ltd., 188 N.S.K. Salai, Madras 600 026 (India) and Published by B. VISWANATHA REDDI on behalf of CHANDAMAMA PUBLICATIONS, Chandamama Buildings, Vadapalani, Madras 600 026 (India). Controlling Editor: NAGI REDDI.**

HANDAMAMA
(Sanskrit)

February 1993
Regd. No. TN/MS (S)

Crrrunch!

# And you'll love the fruit in it!

## nutrine Soft Hearts

*Juicy, Crunchy, Fruity treats*










Visesh/NC/8938